कृष्णदास संस्कृत सीरीज २४८

# वृद्ध-वसिष्ठसंहिता

पाठसंवादसंवलितः 'नारायणी' हिन्दीटीकासहितश्च


सम्पादकोऽनुवादकश्च
डॉ. चन्द्रमौलि रैणा

संशोधकः
प्रो. रामचन्द्र पाण्डेय




द्वितीयो भागः


चौखम्बा कृष्णदास अकादमी, वाराणसी

कृष्णदास संस्कृत सीरीज

२४८

***

# वृद्ध-वसिष्ठसंहिता

पाठसंवादसंवलितः 'नारायणी' हिन्दीटीकासहितश्च


सम्पादकोऽनुवादकश्च

**डॉ. चन्द्रमौलि रैणा**

असिस्टेन्ट प्रोफेसर, ज्योतिष

राष्ट्रिय संस्कृत संस्थान, जम्मू

संशोधकः

**प्रो. रामचन्द्र पाण्डेय**

पूर्व अध्यक्ष, ज्योतिषविभाग

पूर्व प्रमुख, सं.वि.ध.वि.संकाय

काशी हिन्दू विश्वविद्यालय, वाराणसी


**द्वितीयो भागः**





चौखम्बा कृष्णदास अकादमी

वाराणसी

प्रकाशक : चौखम्बा कृष्णदास अकादमी, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : प्रथम, वि०सं० २०७४, सन् २०१७

ISBN : 978-81-218-0389-2 (द्वितीय भाग)
978-81-218-0390-8 (सेट)


के० ३७/११८, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास
पो० बा० नं० ११९८, वाराणसी–२२१००१ (भारत)
फोन : (०५४२) २३३३४५८ P.P. & २३३५०२०

**चौखम्बा संस्कृत सीरीज आफिस**
के० ३७/९९, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास
पो० बा० नं० १००८, वाराणसी–२२१००१ (भारत)
(आफिस) (०५४२) २३३३४५८
(आवास) (०५४२) २३३५०२०, २३३४०३२
Fax : 0542 - 2333458
e-mail : cssoffice01@gmail.com
web-site : www.chowkhambasanskritseries.com

# पूर्वकथन

वृद्ध-वसिष्ठसंहिता का पूर्वभाग दो वर्ष पूर्व सन् २०१५ में प्रकाशित हुआ था। उत्तर भाग की प्रतीक्षा थी। कुछ अपरिहार्य कारणों से उत्तर भाग के प्रकाशन में विलम्ब हो गया। फिर भी प्रसन्नता का विषय है कि उत्तरभाग भी प्रकाशित हो गया तथा ग्रन्थ सम्पूर्ण हो गया। मैं इस अवसर पर ग्रन्थ के सम्पादक डॉ. चन्द्रमौलि रैणा को आशीर्वाद के साथ साधुवाद देता हूँ।

यद्यपि वृद्ध-वसिष्ठसंहिता का सम्पादन कार्य मेरे जम्मू प्रवास काल में ही प्रारम्भ हुआ था। मेरे काशी वापस आ जाने से कार्य की प्रगति में कुछ शिथिलता आ गई। शीघ्र ही तत्कालीन ज्योतिष विभाग के अध्यक्ष, अनेक शास्त्रों में निष्णात मेरे अनन्य मित्र डॉ. बिहारी लाल शास्त्री का समय-समय पर निर्देशन सम्पादक को मिलने लगा। परिणामतः सन् १९८६ में कार्य सम्पन्न हो गया। विगत कुछ वर्षों से इसके मुद्रण की जिज्ञासा हुई और उस दिशा में प्रयास हुआ। दुर्भाग्यवश इस प्रयास के कुछ वर्ष पूर्व ही डॉ. बिहारी लाल शास्त्री का महाप्रयाण हो गया। यदि इस ग्रन्थ का प्रकाशन भी उनके जीवन काल में हो गया होता तो उनको भी अत्यधिक प्रसन्नता होती। उनका स्नेह और आशीर्वाद रैना परिवार पर सदैव रहा है। अतः इस अवसर पर भी स्व. डॉ. बिहारी लाल शास्त्री वासिष्ठ का स्मरण करना आवयक प्रतीत हुआ। वे इस संसार में नहीं हैं; किन्तु इस ग्रन्थ की पूर्णता से उनकी आत्मा अवश्य प्रसन्न होगी।

हस्तलेखों के सम्पादन कार्य में अनेकों कठिनाईयाँ होती हैं। प्रमुख कठिनाई पाठ निर्धारण में आती है। सम्पादक अपनी दृष्टि से उचित पाठ ग्रहण करता है; किन्तु वह पाठ सर्वसम्मत हो यह आवश्यक नहीं। सम्पादन में हस्तलेखों से प्राप्त पाठान्तरों को भी देना आवश्यक होता है। इससे यह सुविधा भी उपलब्ध रहती है कि यदि गृहीत पाठ किसी पाठक को अनुपयुक्त प्रतीत हुआ तो वह पाठान्तरों से किसी अन्य उपयुक्त पाठ का चयन कर सकता है। इसलिए पाठान्तरों को भी देना आवश्यक होता है। पाठान्तर देने से दूसरा लाभ यह होता है कि ग्रन्थ के साथ-साथ हस्तलेख भी सुरक्षित हो जाते हैं।

प्रस्तुत संस्करण उत्तरार्द्ध में २४ वे अध्याय से अन्तिम ४६वें अध्याय तक का समावेश है। इससे पूर्व के २३ अध्याय पूर्व भाग में प्रकाशित हो चुके हैं। उत्तरार्द्ध में अनेक व्यवहारोपयोगी विषय होने से इसका महत्त्व बढ़ गया है। आधान से विवाह

पर्यन्त प्राय: प्रमुख संस्कारों से सम्बन्धित काल निर्णय इसी भाग में दिये गये हैं। कार्यानुसार उचित काल निर्णय ज्योतिषशास्त्र का महत्वपूर्ण प्रतिपाद्य विषय रहा है। काल के महत्व को बतलाते हुये संहिता के उत्तर भाग में लिखा है—

**काल एव ईश्वरः साक्षादीश्वरः काल एव सः।**
**विद्यते चेश्वरज्ञानी चेत्कालज्ञः स एव वै॥४१।१॥**

इस प्रकार काल के विभिन्न गुण एवं दोषों का विस्तृत निरूपण किया गया है। कुछ ऐसे महत्वपूर्ण योगों का वर्णन किया गया है तो अन्यत्र दुर्लभ हैं। यथा— वर्द्धमान, शंख, पद्म, अमृत, आनन्द आदि। ये सभी योग दिन और नक्षत्रों के योग के आधार पर वर्णित हैं। इसी प्रकार ग्रहों की स्थिति के अनुसार धूर्जटि, गुणभास्कर, गुणकौस्तुभ आदि अनेक योग बताये गये हैं। इनके अतिरिक्त राजाभिषेक, गजारिष्ट, अश्वारिष्ट, ग्रहण शान्ति आदि अनेक विषयों से सम्बन्धित पृथक्-पृथक् अध्याय हैं। मुझे आशा है इन विषयों का अवलोकन कर पाठक प्रमुदित होगें।

अन्त में ग्रन्थ के प्रकाशन हेतु चौखम्बा कृष्णदास अकादमी को तथा श्री सचिन गुप्ता एवं श्री कौशिक गुप्ता को साशीर्वाद धन्यवाद देता हूँ, जिन्होंने इस कार्य को सोत्साह सम्पन्न किया।

**रामचन्द्र पाण्डेय**




GOVERNOR
JAMMU & KASHMIR



RAJ BHAVAN
JAMMU-180001

I am happy to learn that Prof. Chander Mauli Raina is bringing out another volume of 'Shri Vridh Vasishta Samhita' which reflects on Vasishta Rishi's valuable contributions to Indian Astrolgy.

I believe that Prof. Raina's scholarship shall make significant contribution towards the promotion of Indian Astrology and also in enhancing knowledge of the subject.

I compliment Prof. Raina for his academic endeavours and wish him high success in all his future work.

13th December, 2016
Jammu.

**(N.N. Vohra)**

**Prof.Ramanuja DEVANATHAN**
**PRINCIPAL**



RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University
Under MHRD, Govt. of India
Accredited by NAAC with 'A' Grade

**SHRI RANBIR CAMPUS, KOT-BHALWAL, JAMMU – 181 122 (Jammu & Kashmir)**

# भूयाज्जगद्धितम्



अस्य शास्त्रस्य सम्बन्धो वेदाङ्गमिति चोदितः।
अभिधेयञ्च जगतां शुभाशुभनिरूपणम्।
इज्याध्ययनसङ्क्रान्तिग्रहषोडशकर्म्मणाम्।
प्रयोजनञ्च विज्ञेयं तत्तत्कालविनिर्णयः।।

इति नारद आह। प्रत्यक्षमिदं शास्त्रं प्रथते। किञ्च श्रूयते इदमपि—

सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम्।
वेदस्य निर्म्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम्।
विनैतदखिलं श्रौतं स्मार्त्तं कर्म्म न सिध्यति।
जस्माज्जगद्धितायेदं ब्रह्मणा निर्म्मितं पुरा।
अतएव द्विजैरेतदध्येतव्यं प्रयत्नतः।।

एवञ्च ज्योतिषं जगद्धिताय प्रवृत्तमिति सिद्धमसंशयेन। यो ज्योतिषं जानाति स एव यागादीन् जानाति नान्यः तादृशं महत्त्वमस्य शास्त्रस्य। ''ज्योतिर्ज्ञानन्तु यो वेद स याति परमां गतिम्'' इत्यभिहितत्वान्मुक्तिमार्गोपदेष्ट्रपि साक्षादङ्गं राजते वेदानाम्।

तत्रापि संहिताग्रन्थस्य प्राधान्यं वर्तते। सम्यक् हितं प्रतिपाद्यं यस्या इति संहिता। अतः लोकहितप्रतिपादकेषु शास्त्रेषु संहिताया महत्त्वं सुतरां विद्यते।।

प्रकृतोऽपि संहिताग्रन्थोऽपर्वोऽनुपमश्च। एतस्य द्वितीयभागस्य बहुतरं वैशिष्ट्यमस्ति। एतस्य ग्रन्थस्य सम्पादकाः परम्परया समधीतज्योतिषविद्याः स्वाध्यायप्रवचनकर्मणि सततमभिरताः सत्यभाषा विदुषामग्रगण्या आचार्या विद्यावारिधिचन्द्रमौलिरैणावर्या राजन्ते। एतेषामुत्तरोत्तराभिवृद्धिमाशास्महे।। अशेषविघ्नशमनोऽनीकेश्वरोऽव्यादिति शम्।।

स्वस्तिश्रीसौम्य-मार्गशिर-कृष्णैकादशी
(२५-११-२१०६)

(रामानुजदेवनाथः)

**Ph:** 0191-2623533, **Fax:** 0191-2623090, **E-mail:** ranbirjmu@gmail.com,
**Web Site:** www.rsksjmu.ac.in

# विषयानुक्रमणिका:



***

।।श्रीः।।

वाचां दैवतमद्भुताक्षरमयं सारस्वताख्यं महः
साक्षात्सन्दधतं गणेशमनिषं ह्यन्तस्तमोवारकम्।।
चन्द्रालङ्कृतशेखरं षिवमथो गौरीं च विघ्नेश्वरं
नत्वा पूज्यवसिष्ठसारकलितामास्वादये संहिताम्।।

नानोपाधियुतान् नमाम्यविरतं श्रीरामचन्द्रान् गुरून्
पाण्डेयाभिधया प्रसिद्धयशसो विद्वद्वराग्रेसरान्।
येषां पुण्यकृपामवाप्य सुधियां मध्येऽद्य निष्किञ्चन–
–ऽप्युत्साहेन वृणोमि शोधनधिया टीकां हि नारायणीम्।।

सश्रद्धं प्रणतोऽस्मि पुण्यपितरौ श्रीशान्तिरामेश्वरौ
श्रीदैवज्ञ बिहारिलालचरणान् धन्यान् वदान्यान् भुवि।
साष्टाङ्गं प्रणिपत्य वै मुहुरहो ध्यायामि विद्यागुरून्
येभ्यः किञ्चिदधीत्य पङ्क्तिविधुरोऽप्यस्म्यत्र धन्यो भुवि।।

# अथाऽऽधानाध्यायः

### स्त्री पुरुष संज्ञा

**सोमात्मिकाः स्त्रियः सर्वाः पुरुषा भास्करात्मकाः।**
**तस्माच्चन्द्रवशात्तासां तेषां सर्वं हि सूर्यतः॥१॥**

सभी स्त्रियाँ सोमात्मिका एवं सभी पुरुष सूर्यात्मक होते हैं इसलिये चन्द्रमा के कारण स्त्रियों में रज तथा सूर्य के कारण पुरुषों में वीर्य होता है॥१॥

### रजोधर्म प्रारम्भ काल

**अर्कान्मुक्तः शशी यद्वद्द्वादशांशादुदेष्यति।**
**रजोदर्शनमप्यासां द्वादशाब्देश्च जन्मतः॥२॥**

जिस प्रकार सूर्य से बारह अंश आगे जाने पर चन्द्रमा उदय होता है उसी प्रकार जन्म से बारहवें वर्ष में स्त्रियों में रजोधर्म प्रारम्भ होती है॥२॥

**क्रमागतः–**

**कश्यपः–**

प्राप्ते च द्वादशे वर्षे याता कन्या रजस्वला।
वर्षाद्द्वादशकादूर्ध्वं यदि पुष्पं वहिर्नहि
अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत्॥

—(कश्यपः पी.यू.धा. टीका मु.चि. ५ प्रकारण, प्रथम श्लोक)

### रजोधर्म का कारण

**अत ऊर्ध्वं प्रतिमासं भवति रजो भौमयोगतस्तासाम्।**
**अनुपचयस्थे चन्द्रे धरणिसुतवीक्षणाद्वापि॥३॥**

इसके ऊपर अर्थात् त्रयोदश वर्ष से प्रत्येक मास में स्त्रियों को रजोधर्म (मासिकधर्म) चन्द्र और मङ्गल के योग से होता है। अनुपचय (१, २, ४, ५, ७, ८, ९, १२) स्थान में चन्द्रमा की स्थिति होने पर मङ्गल की दृष्टि हो तो स्त्रियों में मासिक धर्म होता है॥३॥

### अश्विन्यादि नक्षत्रों में प्रथम रजोदर्शन का शुभाशुभ फल

**प्रथमरजोदर्शनतः शुभाशुभं भवति सर्ववनितानाम्।**
**तस्मात्प्रतिधिष्ण्यफलं वक्ष्ये दस्त्रादितः क्रमशः॥४॥**

प्रथम रजोदर्शन से सभी स्त्रियों का शुभाशुभ फल होता है। इसलिये प्रत्येक नक्षत्रानुसार अश्विनी आदि नक्षत्रों का फल कहते हैं।।४।।

**बहुसुतधनसंपच्छीलसौभाग्ययुक्ता ।**
**विगतनिखिलदोषा दस्रभे पुष्पिणी या।।**
**सुरगुरुपतिभक्ता मानिनी गीतनृत्य-।।**
**प्रवरकुसुमवस्त्रैर्भूषणैर्भूषिता स्यात्।।५।।**

अश्विनी नक्षत्र में प्रथम वार जो स्त्री मासिक धर्म (रजोधर्म) को प्राप्त होती है वह बहुत सन्तान, धन सम्पत्ति शील एवं सौभाग्य से युक्त हो कर सभी दोषों को नष्ट करती है। देवता गुरु एवं पति की भक्त, गीत-नृत्य में माननीय, श्रेष्ठ, वस्त्र, पुष्प तथा आभूषणों से सुशोभित होती है।।५।।

**क्रमागतः-**

**ज्योतिर्निबन्धे-**

सहिता धनपुत्राभ्यामश्विन्यां चेद्रजस्वला।
दोषयुक्ता भरण्यां तु कृत्तिकायां सुपुत्रिणी।।
रोहिण्यां धनसंयुक्ता मृगे स्यात्सुतशालिनी।।
आर्द्रायां भर्तृनिरता निर्वैरा च भवेत्सती।
पतिव्रता पुनर्वसौ पुष्ये च व्यालभद्वये।।
पूर्वाद्वये च युवती भारिका च करद्वये।।

—(१०६, पृ. १-३ श्लोक)

**परपुरुषपरा स्याद्दुर्भगा याम्यधिष्ण्ये।**
**विविधचपलभाषा भूषणासृक्स्त्रवार्ता।।**
**नियतमनतवाक्यत्रस्तविद्वेषिणी सा।**
**कुलजनगुणहीना छत्रपापा खला स्यात्।।६।।**

जिस स्त्री का प्रथम रजोदर्शन भरणी नक्षत्र में होता है वह स्त्री पर पुरुष में आसक्त, दुर्भाग्ययुक्त, विविध प्रकार से चपला, अनर्गल भाषण देने वाली, भूषणों सहित, परन्तु कठोर वार्त्ता करने वाली, झूठे वचनों से भयभीत करने वाली, विद्वेषिणी, कुलीन लोगों जैसे गुणों से हीन, छिपकर पापकर्म करने वाली दुष्टा होती है।।६।।

**वैश्वानरर्क्षे बहुमित्रपुत्रधनान्विता सत्यपरा गुणाढ्या।**
**विकीर्णकामा प्रियवादिनी च नारी सहोत्थप्रवरा कलाज्ञा।।७।।**

कृत्तिका नक्षत्र में प्रथम रजोदर्शन हो तो स्त्री अधिक मित्र, पुत्र तथा धन

से युक्त, सत्य बोलने वाली, गुणवती, विविध कामनाओं वाली, प्रियवादिनी, अपने कुल में श्रेष्ठा तथा कलाओं को जानने वाली होती है।।७।।

क्रमागतः-

अश्विन्यादिषु बोद्धव्यं फलं च प्रथमार्तवे
पुत्राढ्या दुर्भगासाध्वी धनाढ्या सुतशालिनी।।
समशीला सुपुत्राढ्या पुत्रिणी निधनाधना।
सुभगा चार्थिनी विज्ञाश्रीयुता पतिवल्लभा।।
धनिनी निर्धनाभाग्या दुःशीला क्लेश कारिणी।
सुभगा श्रीयुतार्थढ्या निर्धना कलहप्रिया।।
सुशीला धनपुत्राढ्या क्रमेणैवमुदाहृतम्।
कृत्तिकादित्यरौद्रेऽपि मघा ज्येष्ठा रजस्वला।।
आदिपादे शुभं प्रोक्तं सा कन्या मङ्गलप्रदा
द्विपादे चेद्रजो दृष्टं पञ्चविंशति भोजनम्
त्रिपादे च चतुष्पादे शान्तिं कुर्याद्यथा विधि।।

—(वृहद्दैवज्ञ रञ्जनम् पृ.सं. ६६८-७०)

**पितामहर्क्षे सुगुणा सुवृत्ता पतिप्रिया सत्यवती धनाढ्या।**
**बन्धुप्रिया मानरता सुरूपा प्रहृष्टचित्ता प्रविकीर्णकामा।।८।।**

रोहिणी नक्षत्र में प्रथम रजोदर्शन हो तो स्त्री सुन्दर गुणों वाली, शुद्ध आचरण युक्त, पतिप्रिया, सत्य बोलने वाली, धनी, बन्धुओं में प्रिय सम्मान में लगी हुई, सुरूपा, चिन्ता रहित, अनेक इच्छाओं वाली होती है।।८।।

**सदा मृगे भाग्यवती सुवृत्ता कलानुरक्ता विपुलार्थयुक्ता।**
**पतिप्रिया मानवती बहुज्ञा प्रजावती बन्धुजनैः सुमान्या।।९।।**

मृग्शिरा नक्षत्र में प्रथम रजोदर्शन हो तो स्त्री सदैव भाग्यवती, श्रेष्ठ आचरण वाली, कलाओं में अनुरक्त, प्रचुर धनवती, पति प्रिया, सम्माननीया बुद्धिमती, बहुत सन्तानों से युक्त तथा बन्धुजनों में सम्मानित होती है।।९।।

**महेशभे पुष्पवती विशीला मृषानुरक्ता परकार्यसक्ता।**
**पत्युज्झिता प्रेष्यवती विनिःस्वा परप्रिया दुःखवती विपुत्रा।।१०।।**

आर्द्रा नक्षत्र में प्रथम रजोदर्शन हो तो स्त्री शील रहित, झूठी बातों में अनुरक्त अर्थात् मूर्खों में आसक्ति रखे और दूसरे के कार्यों में आसक्त रहे, पति से त्यक्ता, भृत्या, निर्धना, पर प्रिया, दुःखों को झेलने वाली और पुत्रों से रहित होती है।।१०।।

**मायाविनी कार्पटिका विशीलाऽदित्याख्यधिष्ण्ये कुचरित्रयुक्ता।**
**वन्ध्या पुनर्भूः परसद्मसक्ता दुश्चेष्टिता पुष्पवती कलाढ्या॥११॥**

पुनर्वसु नक्षत्र में प्रथम वार रजोधर्म होने पर स्त्री मायाविनी, कपटनी, शील रहित, दुष्ट चरित्रा, बाँझ, पुनः विवाह करने वाली, दूसरे के घर में आसक्त, बुरी चेष्टाओं से युक्ता एवं कलाओं में निपुणा होती है॥११॥

**सुगन्धपुष्पाम्बरभूषणेषु सदा कलागीतनिबद्धचित्ता।**
**पुष्ये त्वगम्यागमना गतार्ता प्रजावती दुःप्रतिभान्विता सा ॥१२॥**

पुष्य नक्षत्र में प्रथम वार पुष्पवती होने पर सुगन्धित पुष्प, वस्त्र भूषणों से युक्ता, गीतावाद्यादि कलाओं में चित्त लगाने वाली, अगम्य गमन करने वाली, रोग रहित, पुत्रों से युक्त, किन्तु दुष्ट प्रतिभा से युक्त होती है॥१२॥

**क्रमागतः–**

**ज्योतिर्निबन्धे–**

स्वातीद्वये धनवती विधवास्यात् परद्वये।
मूलद्वये नित्ययुक्ता सुभगास्यात्परद्वये॥
धनिष्ठायां स्वैरिणी च सती शतभिषद्वये।
अहिर्बुध्न्यद्वये नारी सुभगा भर्तृतत्परा॥

—(ज्योतिर्निबन्धे १०६, पृ. ४-५ श्लोक)

**ऋषिगर्गः–**

पतिव्रता नित्यं सुपुत्रा कष्टचारिणी।
स्वकर्मनिरता हिंस्रा पुत्रपौत्रादिसंयुता॥
नित्यं धनकथा सक्ता पुत्रधान्य समन्विता।
मूर्खार्थाढ्या गुणवती दस्रक्षीदेक्रमात फलम्।

—(मु.चि.मणि ५ प्र. १ श्लोक पी.यू.धा. टीका)

**खला पुनर्भूर्बहुदोषसक्ता भौजङ्गभे पुष्पवती विशीला।**
**मायापटुर्लम्पटिकार्थहीना स्वच्छन्दगा व्याधिकटी कलाज्ञा॥१३॥**

आश्लेषा नक्षत्र में प्रथम रजोदर्शन होने पर दुष्टा, दूसरा विवाह करने वाली, बहुत से दुष्कर्मों में आसक्त, शील रहित, मायावी, लम्पटिका, धन से वञ्चित, स्वछन्द गमन करने वाली, कटी भाग में रोग परन्तु कलाओं को जानने वाली होती है॥१३॥

**पतिप्रिया पुष्पवती मघायां प्रजावती सा कुलटा तथापि।**
**सिंहीव योषिद्वरवृन्दमध्ये प्रभाति खद्योतवदम्बरेऽपि॥१४॥**

मघा नक्षत्र में प्रथम वार रजोदर्शन हो तो स्त्री पति की प्रिया, सन्तान से

युक्त होते हुए भी कुलटा होती है। शेरनी की तरह सभी श्रेष्ठ स्त्रियों के मध्य में वैसे सुशोभित होती है जैसे आकाश पर जुगनू होता है।।१४।।

**भाग्ये भाग्यवती बहुव्ययपरा पानप्रसक्ता वृता।**
**सत्स्वीर्ष्या कुलटा कलासु निपुणा नीरुक्च भग्नव्रता।।**
**दुःपुत्रा कुलपांसिनी खलरजा भग्नोद्यमा पांशुला।**
**दुःखा पापरता विधर्मनिरता षण्ढप्रिया संततम्।।१५।।**

पूर्वाफाल्गुनी नक्षत्र में प्रथम वार रजोदर्शन होने पर स्त्री भाग्यवती, बहुत खर्चा करने वाली, पान प्रक्रिया में आसक्त वृत्ति वाली, सज्जनों से ईर्ष्या करने वाली, कुलटा, कलाओं में निपुणा, रोगों से रहित, नष्ट व्रता, दुष्ट पुत्रों से युक्त, रक्तप्रदरादि दोषयुक्त, भग्न उद्यम वाली, अपने सम्मान को धूलि में मिलाने वाली (पांशुला संज्ञा विशेष है), कुल कलंकिनी, पापाचरिणी, धर्म से विमुख एवं नपुसंकों की प्रिया होती है।।१५।।

**कुलद्वयानंदकरी विभक्तकार्या कलाढ्या विनिगृह्यचित्ता।**
**विकीर्णकामा रुचिरा सुवृत्ता श्लक्ष्णार्यमर्क्षे विगताऽरिवैरा।।१६।।**

उत्तराफाल्गुनी नक्षत्र में प्रथम वार रजोदर्शन हो तो दोनों कुलों को आनन्दित करने वाली, कार्यों को विभक्त करे, कलाओं में निपुण, अपने चित्त को नियन्त्रित रखने वाली, अनेक इच्छाओं वाली, सुन्दर सुशीला, अच्छे चरित्र वाली तथा शत्रुओं से वैर न करने वाली होती है।।१६।।

**सम्भोगशीला परकार्यकारिणी वन्ध्वर्चिता श्रेष्ठगुणानुरक्ता।**
**गताभ्यसूया विगतारिवर्गा हस्तेंऽगना पुष्पवती विलोला।।१७।।**

हस्त नक्षत्र में प्रथम वार रजोदर्शन हो तो स्त्री भोगशीला, दूसरे के कार्य को करने वाली, भाई-बन्धुओं से पूज्या, श्रेष्ठ गुणों में अनुरक्त, ईर्षा एवं शत्रु वर्ग रहिता तथा लोलुप्ता रहित होती है।।१७।।

**त्वाष्ट्रे प्रियालुः सुरतप्रियोद्यद्वैरा निगृह्यात्महिते नियुक्ता।**
**निवृत्तवैरामयपीडिताङ्गी संगीतविद्यानिपुणा कलासु।।१८।।**

चित्रा नक्षत्र में प्रथम वार रजोदर्शन हो तो अपने प्रिय (पति) द्वारा चाही जाने वाली, सुरत प्रिया, वैर, शत्रुता में लोगों को पिछाड़ कर अपने हित को करने वाली, वैर एवं रोग से निवृत्त परन्तु पीड़ित अङ्गों वाली, संगीत, विद्या तथा कलाओं में निपुणा होती है।।१८।।

**दृढव्रता सत्यपरा सुवृत्ता निवृत्तरागा पररन्ध्रगोप्त्री।**
**गजाभिगामिन्यनिलाह्वयर्क्षे प्रमोदिनी मंगलकार्यवृन्दे।।१९।।**

स्वाती नक्षत्र में प्रथम वार रजोदर्शन हो तो स्त्री कठोर व्रती, सत्य भाषिणी, सुन्दर आचरण वाली वैरागी, पर दोषों को छुपाने वाली, हाथियों की सवारी करने वाली तथा मङ्गल कार्यों में प्रमोद वर्धिनी होती है।।१९।।

क्रमागतः-

कश्यपः-

मानिनी श्रीयुतासाध्वी सुभगाबन्धु पूजिता।
सौख्यन्विता पुत्रवती पतिभक्ता च दस्रभे।।१।।
काकबन्ध्या पर प्रेष्या दुःशीला स्वैरिणीरवला।
स्वगर्भपातरता याम्यभे बहुभाषिणी।।२।।
मृतप्रजा पर प्रेष्या पर सन्तान सञ्युता।
परपुंसितरताभोग्या मान युक्ता च वह्निभे।।३।।
सुरुपा सुभगा मान्या पतिभक्ता सुपुत्रिणी।
श्रीसंयुता स्थिरा धीरा मन्दगा स्याद्विधातृभे।।४।।
पतिव्रता सुपुत्राढ्या नारी सर्वसहासती।
भोगान्विता धर्मरता चान्द्रभेशीघ्रगामिनी।।५।।
चलव्रता खला कष्टा रजोगुण समन्विता।
बन्ध्या पितृगृहसक्ता व्यसिनीरौद्रभे तदा।।६।।
कुलाचाररता मान्या पतिभक्ता सुपुत्रिणी।
सुभगाधनिनी भोग्या कुटिला द्वितिभे सती।।७।।
प्रचण्डकामाऽपि सती सुपुत्रा भातृमोदिनी।
यशस्विनी धनोपेता वहुव्यय परेज्यभे।।८।।
अलसा निर्धनाकामा पुंश्चली कोपिनीखला।
दुःसन्तानवती दुष्टा परकार्यरताऽहिभे।।९।।

—(कश्यपसंहिता अध्याय २३, श्लोक संख्या १-९)

**द्विदैवभे पुष्पवती प्रवृत्ता विचित्तमोघामयवैरिसंघा।**
**विवादशीला विपुलप्रतापा सम्भोगमाप्नोति शुनीव शश्वत्।।२०।।**

विशाखा नक्षत्र में प्रथम वार रजोदर्शन हो तो स्त्री चंचल चित्त वाली, असत्य में तत्पर, शत्रु समूह के बिना विवादशीला, बहुत पराक्रमी परन्तु निरन्तर कुतिया की भान्ति भोग प्राप्ति करती है।।२०।।

**मैत्रे विमित्रा सगदाङ्गहीना विवादशीला विगुणा सवैरा।**
**प्रवृत्तरागा प्रविकीर्णकामा स्वगर्भसंस्त्रावपरा विरक्ता।।२१।।**

अनुराधा नक्षत्र में प्रथम वार रजोदर्शन हो तो स्त्री मित्र रहित, रोगयुक्त, अङ्गहीना, विवादशीला, गुणों से रहित, वैरयुक्ता, राग-अनुराग में प्रवृत्त, विखरी हुई

इच्छाओं वाली, अपने गर्भ को स्वयं नष्ट करने वाली तथा दूसरों से विरक्त होती है॥२१॥

**पौरन्दरे पुष्पवती विमर्षा विनिंदिताऽतिव्यसनी सुगूढा।**
**परंतपा प्रव्रजितेरतात्मा परप्रजासूयवती सपापा॥२२॥**

ज्येष्ठा नक्षत्र में प्रथम वार रजोदर्शन हो तो स्त्री सहनशीलता (धैर्य) हीना, निन्दिता, छुपछुपा कर अत्यधिक व्यसन करने वाली, दूसरे को कष्ट दे, निरन्तर घूमने की चाह रखे, दूसरे की सन्तान के साथ द्वेषी तथा पापिनी होती है॥२२॥

**मूले प्रकामाऽधिकसत्वहीना व्यसुर्वुभुक्षोद्धृतदोषचित्ता।**
**निरन्तरं दूषितकर्मवृत्ता प्रजावती गोगजगामिनी च॥२३॥**

मूल नक्षत्र में प्रथम वार रजोदर्शन हो तो स्त्री कामनाओं सहित, अधिक सत्त्वहीना, पर प्राणों की भूखी, उद्धृत दूषित चित्तवती, निरन्तर दूषित कर्मों में प्रवृत्त, सन्तान युक्त, हाथी अथवा गाय की भान्ति चलने वाली होती है॥२३॥

**पानीयभे पुष्पवती विवादशीला कलाकर्मणि दुष्टचित्ता।**
**परानुरक्ता वनशैलसक्ता प्रच्छन्नपापाऽद्भुतकर्मरक्ता॥२४॥**

पूर्वाषाढ़ा नक्षत्र में प्रथम वार पुष्पवती हो तो स्त्री विवादशीला, कला कार्यों में संलग्न, दुष्ट चित्त वाली, पर पुरुष में अनुरक्त, वन-पर्वतों में घूमने में आसक्ति, छुपाकर पाप कर्मों में रत तथा अद्भुत (विचित्र) कार्यों में संलग्ना होती है॥२४॥

**वैश्वे सती पुष्पवती सुवृत्ता महागुणैरुन्नतिमातनोति।**
**चित्तानुरक्ता स्वपतेरुदारा युक्ता विवैरा विनिवृत्तदोषा॥२५॥**

उत्तराषाढ़ा नक्षत्र में प्रथमवार रजोदर्शन होने पर स्त्री सुन्दर आचरण युक्ता, बहुत गुणों से उन्नति प्राप्त, अनुरक्त चित्त से पति के लिये उदार, शत्रु रहित तथा दोष रहित आचरण वाली होती है॥२५॥

**वहुसुतधनधान्यप्रोल्लसद्भूषणाढ्या ।**
**प्रचुरगुणगणाद्यैर्भर्त्तुरानन्ददा स्यात्॥**
**युवतिजनमता सा विष्णुधिष्ण्ये विचित्रा।**
**प्रवरनटनगीतातोद्यवाद्ये ह्यभिज्ञा॥२६॥**

श्रवण नक्षत्र में प्रथम वार रजोदर्शन होने पर स्त्री बहुत पुत्र, धनधान्यादि तथा सुन्दर भूषणों से सुशोभित, कई प्रकार के गुणों से पति को अनन्दित करने

वाली, युवतियों में विचित्रा अर्थात् श्रेष्ठा एवं अग्रगण्या नृत्य-गीतादि तथा वाद्यों को जानने वाली होती है।।२६।।

**क्रमागतः-**

**कश्यपः-**

मानिनी लास्यनिपुणा गेयज्ञा शत्रु सूदिनी।
पितृवेश्मरता साध्वी पितृभक्ता च पितृभे।।१०।।
कृशा क्लेश सहा वन्ध्या परकार्यरता खला।
निशान्धा पुंश्चली क्रुद्धा दुर्भाग्याभग दैवते।।११।।
बन्धुपूज्या पुत्रवती धर्मसक्ता दृढ़व्रता।
पितृमातृजनैर्युक्ता विवैरार्यमभे सती।।१२।।
बहुपुत्र बहुधना निर्दोषा भोगभागिनी।
व्यवहार कलाभिज्ञा भर्तृपूज्या हस्तभे।।१३।।
आढ्या वाणिज्यकुशला निपुणा चित्रकर्मसु।
कामभोगपरा दक्षा सुशीला चित्रभे सती।।१४।।
पुत्रपौत्रवतीसाध्वी कलाभिज्ञा धनान्विता।
साधुप्रिया धर्मसक्ता भोगिनीरुक्च वायुभे।।१५।।
परपुंसरता दुष्टा नीचकर्मरता खला।
दुष्पुत्रा मलिना रुष्टा द्विदैवर्क्षे च दुर्भगा।।१६।।
पतिपक्षार्चिता कान्ता सुपुत्रासुभगा गुणैः।
स्वकुलाचार निरतागुणढ्या मित्रभे सती।।१७।।
दुष्पुत्रा दुर्भगा क्लेशा दुश्चारिभिरताऽव्यसुः।
इन्द्रभे रोगसंयुक्ता नीचकर्मपराव्यया।।१८।।

—(कश्यप संहिता अध्याय २३, श्लोक संख्या १०-१८)

**अतिवसुधनभाक्स्यान्मानिनी सच्चरित्रा।**
**विगतभयकुवृत्ता सन्नतांगी गुणाढ्या।।**
**पतिहितनिरता स्याद्बन्धुवर्गैः प्रपूज्या।**
**प्रियहितकरकर्मण्युत्सुका प्रोष्ठपद्याम्।।२७।।**

धनिष्ठा नक्षत्र में प्रथम वार रजोदर्शन होने पर स्त्री अत्यन्त भोगी, धनवती, भाग्यशालिनी, माननीया, श्रेष्ठ चरित्रवती, अपने पति के साथ निर्भय एवं निर्लज्ज व्यवहार करने वाली, गठे हुए शरीर वाली, गुणवती, पति हित रता, अपने भाई-बन्धुओं में पूज्या, प्रिय एवं हितकर कार्यों को करने में उत्सुक तथा पररूपा होती है।।२७।।

क्रमागतः–

कश्यपः–

परदुःखोपशमनी स्वार्कानिरतासती।
पुत्रारोग्यवती भोग्या नैऋत्यर्क्षे विपुत्रिणी॥१९॥
क्रूरकर्मरतादुष्टा छन्नपापाखलालसा।
दीर्घकामाऽति दुष्पुत्रा तोयर्क्षे दुर्मता जड़ा॥२०॥
भोग सौभाग्य संयुक्ता सुपुत्र सुभगासती।
कुशलाऽखिल कार्येषु वैश्वभेपतिपूजिता॥२१॥
धनधान्य सुपुत्राढ्या मानिनी भोगभागिनी।
पतिप्रिया बन्धुपूज्या धर्मज्ञा श्रवणे सती॥२२॥
धनधान्यागमपरा सुपुत्राबन्धु पूजिता।
साध्वीसर्वगुणोपेता वसुभेपतिमोदिनी॥२३॥
बहुपुत्रा गुणवती धनिर्ना मानिनी सती।
स्वकुलाचार निरता शत गे भोगदायिनी॥२४॥
शिल्पकार्यरता क्रोधा निपुणाद्यूत कर्मणि।
बन्धकी बन्धुभि द्वेष्या पूर्वाभाद्रपदे खला॥२५॥
पुत्रसौभाग्य संयुक्ता पतिभक्तादृढ़व्रता।
बन्ध्वर्च्या धर्मनिरताऽहिर्बुध्न्ये धनिनी सती॥२६॥
धनधान्यकुलासाध्वी कामिनी बहुपुत्रिणी।
पतिभक्ता बन्धुपूज्या गुणैर्युक्ता च पौणभे॥२७॥

—(कश्यप संहिता अध्याय २३, श्लोकसंख्या १९-२७)

निखिलवरकलाढ्या नृत्यगीतानुरक्ता।
विविधगुणगणाढ्या मानिनी भाग्ययुक्ता।
विविधपरिवरौघैः संवियुक्ता शतर्क्षे।
पतिकुलजनमान्या पुष्पवत्यंगना सा॥२८॥

शतभिषा नक्षत्र में प्रथम वार रजोदर्शन होने पर स्त्री समस्त श्रेष्ठ कलाओं में धन्या, नृत्य-गीतादि में अनुरक्त, विविध प्रकार के गुणों से युक्ता, सम्मान को प्राप्त एवं भाग्यशालिनी, मिले-जुले परिवार से युक्ता, पतिकुल में सभी सदस्यों में मान्या होती है॥२८॥

शुभगुणगणहीना कर्कशा भाग्यहीना।
त्वनृतपरुषमन्त्रैर्दुर्जनान्तर्जयन्ती ॥
विचरति गुणमध्ये दुर्भगा वाजपादे।
जनकसदनवासा नष्टकामाऽद्यरूपा॥२९॥

पूर्वाभाद्रपदा में प्रथम वार पुष्पवती होने वाली स्त्री शुभगुणों से हीना, कर्कश स्वभाव वाली, भाग्यहीना, असत्य कठोर मन्त्रणाओं से दुष्टों को तारने वाली, गुणों के मध्य में विचरण करती हुई, दुर्भाग्य के कारण पिता के घर में निवास करने वाली, नष्ट कामनाओं वाली तथा सामान्य रूप वाली होती है।।२९।।

**गुणसुतसुखसंपद्भूषितांगी त्वभिज्ञा।**
**अभिभवति सपत्नान्सज्जनान्मानयन्ती।।**
**मृदुमधुरसुवाचा गीतनृत्योद्यता सा।**
**प्रवरबहुकलाज्ञा चोत्तराभाद्रपादे।।३०।।**

उत्तराभाद्रपदा नक्षत्र में प्रथम वार रजोदर्शन होने पर गुण, सुख, पुत्र तथा सम्पत्ति से युक्ता, सुशोभित अङ्गों वाली, सब कुछ समझने वाली, पतित लोगों को पीड़ा देती हुई सज्जनों को मान-सम्मान देने वाली, सुन्दर मधुर वचन कहने वाली, नृत्य गीतादि में रूचि रखे तथा अनेक प्रकार की कलाओं में धन्या होती है।।३०।।

### अनिष्टप्रद प्रथम रजोदर्शन

**पौष्णे विशीला बहुदुःखशोका विवादशीला पितृवेश्मसंस्था।**
**पराभितप्ता पतिपुत्रदूरा नीचैरता कापटिका च कन्या।।३१।।**

रेवती नक्षत्र में प्रथम वार रजोदर्शन होने पर स्त्री शील रहित, अत्यन्त दुःख एवं शोक से युक्ता, विवादशीला, पिता के घर में वास करे, दूसरों से दुःखी, पति एवं पुत्र से दूर, नीच लोगों में रत, कपट करने वाली होती है।।३१।।

### वार क्रम से प्रथम रजोदर्शन

**रिक्तासु पर्वस्वथ कार्तिकेयहर्योः क्षयाहे व्यतिपातविष्ट्याम्।**
**एकार्गले पारिघवैधृतेषु चोत्पातसन्ध्यासु रजोऽप्यनिष्टम्।।३२।।**

रिक्ता तिथियों (चतुर्थी, नवमी, चतुर्दशी), पर्वतिथियों (चतुर्दशी, अष्टमी, अमावस्या, पूर्णिमा, संक्रान्ति), षष्ठी तिथि, द्वादशी तिथि, क्षय तिथि, व्यतीपात, भद्राकाल, एकर्गल, परिघ, वैधृति योगों में, त्रिसन्ध्या काल में प्रथम रजोदर्शन अनिष्टप्रद होता है।।३२।।

**सदा गदार्त्ता सुपतिव्रता सा वंध्या प्रजावत्यतुलार्थयुक्ता।**
**आनन्दकर्त्री त्वसती च पुष्पवती क्रमाद्भास्करवासरेषु।।३३।।**

वार क्रम से कन्या का प्रथम रजोदर्शन फल– रविवार प्रथम रजोदर्शन हो तो सदैव रोग से युक्ता, सोमवार को पतिव्रता, मङ्गलवार बन्ध्या, बुधवार सन्तान वाली, गुरुवार प्रचुर धनवती, शुक्रवार आनन्द करने वाली तथा शनिवार को दुष्टा होती है।।३३।।

क्रमागतः–

कश्यपः–

रोगिनी रविवारे तु सोमवारे पतिव्रता।
दुःखिता भौमवारे तु बुधे सौभाग्य संयुता॥
श्रीसंयुता गुरोर्वारे पतिभक्ता भृगोर्दिने।
मलिना मन्दवारे तु रात्रावपि तथैव च॥

शुभाशुभ ग्रहों का प्रथम रजोदर्शन पर प्रभाव

आरोग्यसौभाग्यवती च सौम्यवर्गेषु सा पुष्पवती च कन्या।
दुःखा तथानर्थविवादशीला वर्गेष्वसौम्येषु च दुर्मतिः स्यात्॥३४॥

लग्न में शुभ ग्रहों का चन्द्रमा, बुध, गुरु, शुक्र का वर्ग हो तो प्रथम वार पुष्पवती होने पर कन्या आरोग्य एवं सौभाग्य को प्राप्त करती है। इसी प्रकार पाप ग्रहों का (सूर्य, मङ्गल, शनि) वर्ग हो तो दुःखी, रोगिनी, अनर्थ करने वाली, विवादशीला एवं दुष्ट बुद्धि वाली होती है।॥३४॥

रजोदर्शन का शुभाशुभ फल

नक्षत्रवारतिथियोगदिनार्द्धकाल ।
षड्वर्गसंकथितमिष्टमनिष्टमेतत् ॥
ज्ञात्वाल्पदोषमथ भूरि गुणं च पश्चाद्
वृद्धान् गुणोत्तमपरं शुभकर्म कार्यम्॥३५॥

नक्षत्र, वार, तिथि दिनार्धकाल ये सभी षड्वर्ग में कहे गये फल के अनुसार ही शुभाशुभ फल देते हैं। अतः अल्प दोषों को समझ कर बाद में प्रचुर गुणों को समझते हुए बड़े-बुजुर्गों को गुणों के अधिक समय में शुभ कार्य करने चाहिए।॥३५॥

प्रभूतदोषं यदि दृश्यते तत्पुष्पं तदा शान्तिककर्म कार्यम्।
विवर्जयेदेव तदेकशय्यां यावद्रजोदर्शनमिष्टमग्रे॥३६॥

यदि प्रथम वार रजस्वला काल में अत्याधिक दोष प्रतीत हों तो पहले शान्तिक कर्म करने चाहिए। तत्पश्चात् जब तक इष्ट रजोदर्शन न हो, तब तक एक शय्या से कन्या को भिन्न करना चाहिए।॥३६॥

चाण्डाली पतितासमाथ रजकी शूद्रा दिनादिक्रमात्।
शुद्धा पुष्पवती च पंचमदिने हव्येषु कव्येषु च॥
चेद्दृष्टेऽह्नि नवोदकुंभसलिलौ सन्मंत्रितैरौषधैः।
स्नानं पापनुदं सपंचकलशैः कार्यं समृद्‌भिर्जलैः॥३७॥

रजस्वला कन्या प्रथम दिन चण्डाली, दूसरे दिन पतिता, तीसरे दिन रजकी (धोविन), चौथे दिन शूद्रा तथा पाँचवें दिन देवताओं एवं पितरों के पूजन के लिए शुद्ध हो जाती है। यदि पाँचवें दिन क्रूरवार आ जाए तो शुद्ध (नवीन) कलश के जल से अथवा मन्त्रित, औषधियों से पाँच भरे हुए कलशों के जल से स्नान करने से सभी पाप नष्ट हो जाते हैं।।३७।।

**क्रमागतः-**

**प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।**
**तृतीये रजकी प्रोक्ता चतुर्थेऽह्नि शुद्ध्यति।।**

—(मु.चि. मणि ५ प्र. ६ श्लोक पी.यू.धा.टी.)

**ईशानतो गोमयमण्डले च परिसृतेऽग्नौ जुहुयात्सदूर्वाम्।**
**युग्मां घृताक्तां च समित्प्रमाणां गायत्रिकांसाष्टसहस्त्रसंख्याम्।।३८।।**

ईशान कोण में गाय के गोबर से लिप्त मण्डल बना कर स्थापित अग्नि में समिधा प्रमाण से धीमें में लिप्त युग्म दुर्वाओं से आठ हज़ार संख्या में गायत्री होम करे।।३८।।

**शतप्रमाणामथवाऽघहंत्री शुभैर्यवैर्व्याहृतिभिस्तिलैश्च।**
**ततः सुरान्भूमिसुरान्पितृंश्च सन्तर्पयेदन्नसुवर्णवस्त्रैः।।३९।।**

शतप्रमाण अथवा अभी नष्ट होने वाली अग्नि हो तो पवित्र जौ तथा तिल मिश्रित करके व्याहृतियों के साथ होम करके देवताओं भूदेवताओं अर्थात् ब्राह्मणों को तथा पितरों को अन्न, वस्त्र एवं स्वर्ण दान करके तृप्त करना चाहिए।।३९।।

**क्रमागतः-**

**कश्यपः-**

**दोषाल्पत्वे गुणाधिक्ये सेककर्म समाचरेत्।**
**निंद्यार्क्षे तिथिवारेषु यत्रपुण्यं प्रदृश्यते।।**
**तत्रशान्तिः प्रकर्त्तव्या घृतदूर्वातिलाक्षतैः।**
**प्रंत्येकमष्टशतं च गायत्र्या जुहुयात्ततः।।**
**स्वर्ग गोभूतिलान्दद्यात्सर्वदोषापवुत्तये।**
**भर्ता तस्यापि गमनं वर्जयेद्रक्त दर्शनात्।।**

—(ना.सं.अ. १५, श्लोक ३२-३४)

## आधनम् निर्णय

**पौष्णद्वये पित्र्यमयाम्यसार्पविष्णुद्वये नेधनजन्मभेषु।**
**उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने।।४०।।**

रेवती, अश्विनी, मघा, भरणी, आश्लेषा, श्रवण, धनिष्ठा, लग्न तथा

अष्टम स्थानों में, उत्पात सहित पापग्रहों द्वारा दूषित तथा अनिष्ट लग्न में आधान कार्य नहीं करना चाहिए।।४०।।

**उपप्लवे वैधृतिपातयोश्वच विष्ट्यां दिवा पारिघपूर्वभागे।**
**संध्यासु पर्वस्वपि मातृपित्रोर्मृतेऽह्नि पत्नीगमनं विवर्ज्यम्।।४१।।**

उपद्रव, वैधृति, व्यतीपात योग भद्राकाल में दिवा, परिघ योग का पूर्व भाग त्रिसन्ध्या काल, पर्व तिथियों (चतुर्दशी, अष्टमी, अमावस, पूर्णिमा एवं संक्रान्ति) में, माता-पिता के श्राद्ध दिवस में पत्नी से सम्भोग करना विवर्जित है।।४१।।

## पुत्र-पुत्री प्राप्ति योग

**दिनेषु युग्मेषु च वक्ष्यमाणयोगैः सुतार्थी स्वसतीमुपेयात्।**
**दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा च गण्डांस्तिथिलग्नभानाम्।।४२।।**

बताये हुए योगों में सम दिनों में अर्थात् रजोदर्शन से (चतुर्थ, षष्ठ, अष्ट, दशम, द्वादश चतुर्दश षोडश) दिनों में पुत्र की कामना रखने वाले व्यक्ति को अपनी सद्भार्या के साथ सहवास करना चाहिए। इसी प्रकार कन्या की इच्छा रखने वाले व्यक्ति को गण्डान्त तिथि, लग्न एवं नक्षत्रों को त्याग कर अयुगम दिनों में (पञ्चम, सप्तम, नवम, एकादश, त्रयोदश, पंचदश) दिनों में गर्भाधान करना चाहिए।।४२।।

**आधानलग्ने विषमांशराशौ जीवेंदुजाभ्यां युतवीक्षिते वा।**
**नान्यैः सुपुत्रस्त्वथ पापखेटैः पापी च मिश्रैर्बलिभिर्विमिश्रः।।४३।।**

आधान लग्न में, विषम राशि नवांश में, गुरु एवं बुध का युति सम्बन्ध या दृष्टि सम्बन्ध होने पर पुत्र प्राप्ति होती है। अन्य योगों में पाप ग्रहों से या शुभाशुभ ग्रह मिश्रित होने से पुत्र प्राप्ति नहीं होती।।४३।।

**युग्मांशलग्ने बलयुक्तशुक्रनिशाकराभ्यां युतवीक्षिते वा।**
**नान्यैः सुकन्या त्वथ पापरूपा पापैस्त्वशेषं तु विचिंत्य वाच्यम्।।४४।।**

समनवांश या लग्न में बलशाली चन्द्र शुक्र का युति सम्बन्ध अथवा परस्पर दृष्टि सम्बन्ध हो तो सुन्दर कन्या प्राप्ति होती है। यदि पाप लग्न एवं नवांश हो अथवा पापग्रहों से युत या दृष्ट हो तो सुन्दर कन्या का जन्म नहीं होता विधिपूर्वक विचार करके ही फल कहना चाहिए।।४४।।

**ओजर्क्षांशे लग्नगे वीर्ययुक्ते जीवेन्द्वर्कैरोजराश्यंशकस्थैः।**
**पुंजन्म स्याद्व्यत्यये कन्यका स्यान्मिश्रैः षण्ढो द्व्यंगगैर्द्वित्रिजन्म।।४५।।**

विषम नवांश, लग्न या विषम नक्षत्र में बलशाली बृहस्पति, चन्द्रमा तथा सूर्य विषम नवांश राशियों में हों तो पुत्र का जन्म होता है। इसके विपरीत होने पर कन्या जन्म होता है। मिश्रित ग्रहों की स्थिति आ जाने पर नपुंसक, दो या तीन बच्चे भी होते हैं।।४५।।

**ओजांशकर्क्षाद्विषमर्क्षसंस्थः पुंजन्मकारी रविसूनुरेकः।**
**विचार्य्य वीर्यं पुरुषग्रहाणां वाच्योऽथ पुत्रस्त्वथ पुत्रिका वा।।४६।।**

विषम नवांश, विषम नक्षत्र में सूर्य पुत्र शनि एक पुत्र को देने वाला होता है। पुरुष ग्रहों का बल विचार करके ही पुत्र एवं कन्या जन्म के सन्दर्भ में कहना चाहिए।।४६।।

**चन्द्रार्कपुत्रक्षितिजैः स्ववर्गैर्बृहस्पतौ धर्मविलग्नपुत्रगे।**
**योगेष्वपत्यं भवतीहनिश्चयादमी च योगा विफला विवीजिनाम्।।४७।।**

चन्द्रमा, सूर्य पुत्र शनि तथा मङ्गल अपने-अपने नवमांशों में स्थित हों, बृहस्पति नवम में, लग्न में या पञ्चम में हो तो यह योग अमी योग कहलाता है इस योग में निश्चित पुत्र प्राप्ति होती है, परन्तु विबीजिनाम् अर्थात् नपुंसकों के लिये यह योग विफल हो जाता है।।४७।।

**क्रमागतः–**

**नारदः–**

**अयुग्मे दिवसे भार्या कन्यार्थी कामयेत्पतिः।**
**निर्वीजानामिमे योगाः सर्वदा निष्फलप्रदाः।।**

—(अध्याय १६ श्लोक ८)

**कश्यपः–**

**पुंग्रहैर्वीक्षिते युग्मतिथौ पत्नीं च कामयेत्।**
**पुंजन्म व्यत्यये स्त्रीस्थान्मिश्रे षण्ढत्व सम्भवः।।**
**निर्वीजानाममी योगा विदूशामिव निष्फलाः।**
**कान्ताकटाक्षदृक्पाता वशीकृतजगत्त्रया।।**

—(अध्याय २३, श्लोक ४२-४३)

**क्रमागतः–**

**ज्योतिषसारे–**

**रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।**
**पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः।।**
**सप्तम्याप्रजायोषिदष्टम्यामीश्वरः पुमान्।**
**नवम्यां सुभगानारी दशम्यां प्रवरः सुतः।।**

एकादश्यामधमा स्त्री द्वादश्यां पुरुषोत्तमः।
त्रयोदश्यां सुतापापा वर्णसङ्करकारिणी॥
धर्मजश्च कृतज्ञश्च आत्मवेदो दृढव्रतः।
प्रजापते चतुर्दश्यां पञ्चदश्यां पतिव्रता॥
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान्॥
—(पृ. ५५, १-५ श्लोक)

**न च दशमनिशाविवर्जनं प्रकुर्यादृतुसमये पुरुषः स्त्रियः कदाचित्।**
**ऋतुरपि दशषड्वासराणि प्रथमनिशात्रितयं न तत्र गम्यम्॥४८॥**

**इति श्री ब्रह्मर्षि वृद्ध वसिष्ठ विरचितायां संहितायां आधानाध्यायश्चतुर्विंशः॥२४॥**

पुरुष को स्त्री के ऋतु समय से दशम रात्रि तक कदाचित् विवर्जित नहीं करना चाहिए, क्योंकि ऋतु सोलहा दिन तक ही रहती है। इसमें प्रथम तीन रात्रियों में स्त्री से सम्भोग नहीं करना चाहिए॥४८॥

वृद्ध वसिष्ठ संहिता के आधानाध्याय की 'नारायणी' हिन्दी टीका सम्पूर्ण॥२४॥

**पाठान्तरम्**

०१.(अ) वा. सम्पूर्णश्लोकस्यलोप: ज२-सोमात्मिकाया: (सोमात्मिका)
(अ) ज१, ज२ द्वादशांश: प्रदृश्यते (यद्वद्द्वादशांदुदेष्यति)
०२.(ब) वा. मु.पु. द्वादशांशैश्च (द्वादशाब्देश्च)
०४.(ब) ज२-द्वस्रादिश: (दस्रादित:)
०५.(ब) दोशा (दोषा)
(ब) ज१, ज२, सुन्वराणीया (पुष्पिणीया)
०६.(ब) ज१, वयार्ता, ज२, श्रुवार्ता (सृक्स्रवार्ता)
(द) ज१, ज२, कुलजनहीना (कुलजनगुणहीना)
०७.(अ) ज१, बहुपुत्रमित्रधना, ज२, बहुपुत्रमित्रधनान्वती (वहुमित्रपुत्रधनान्विता)
(अ) ज१, सत्यव्रतीगुणाढय, ज२, सत्यवतीगुणाढ्या (सत्यपरागुणाढ्या)
(ब) ज१, प्रियवोदिनी (प्रियवादिनी), ज१, २, मानीसहोर्य (नारी सहोत्थप्रवरा)
०८.(अ) वा. पीतामहर्क्षे (पितामहर्क्षे)
(अ) ज१, २-पतिव्रता (पतिप्रिया)
(ब) ज१, ज२-मानवती (मानरता), ज१, ज२-मदृष्टविंशा वा-प्रहुष्टचित्त (प्रहृष्टचित्ता), ज१, ज२-प्रकीणाकामा वा.-वकीणमिुन्नकामां (प्रविकीर्णकामा)
०९.(अ) वा-विपुलाथोद्रपा (विपुलार्थयुक्ता)
१०.(अ) वा. पुष्यवतीविशीला, मु.पु. पुष्पवतीविशाला (पुष्पवतीविशीला)
(ब) ज१-प्रत्यंन्फिता, ज२-प्रत्यग्रिता, वा.-पत्युसिता (पत्युज्झिता), ज१-पेव्यवतीविधाश्च,

जर-प्रेव्यतीविशाश्वा, वा.-मेवतीविनिखा (प्रेष्यवती विनि:स्वा)

११.(अ) ज१, ज२-कापरिका (कार्पटिका), ज१, ज२-विशीलादिव्यस्थधिष्ण्ये, वा. विशापादिमाख्यधिष्ण्यं, मु.पु. विशालाऽदिव्याख्यधिष्ण्ये (विशीलाऽदित्याख्यधिष्ण्ये)

(ब) ज१-पुष्यावती, ज२-पुत्रवती (पुष्पवती)

१२.(अ) ज१-मृषिणिपु (भूषणेषु)

१३.(ब) ज१-मायापटलापाटिकार्य, ज२-मायापटुलापटिकार्थ, वा.-मायापटुर्लमटिकार्थ (मायापटुर्लम्पटिकार्यहीना)

१४.(अ) वा. प्रणवती (पुष्पवती)

(ब) ज१-षयोतवंदचरेपि, ज२-खद्योतवदंचरेपि (खद्योतवदम्बरेऽपि)

१५.(ब) ज१-साव्या (सत्यस्वीर्ष्या), ज१-नीरूक्त, ज२-ग्वीरूक (नीरूक्च)

(स) ज१, ज२-दुर्वृता (दु:पुत्रा), ज१, ज२-कुलपांसिनीसरलता (कुलपांसिनीखलरजा)

(द) ज१, ज२-दु:खीमानरता (दु:खापापरता)

१६.(अ) करत्रविनिगात्प्रवृत्ता, ज२-कलत्रविनिगात्प्रवृत्ता (कलाढ्याविनिगृह्यचित्ता)

(ब) ज१-सुचिरासुवृत्ता, ज२-सुचिरानुवृत्ता (रूचिरासुवृत्ता)

१७.(अ) ज१, ज२-संभोगलीला (सम्भोगशीला)

१८.(अ) ज१, ज२-कृपालु (प्रियालु:), ज१-सुरतप्रियाचवैरि, ज२-सुरताप्रियाचवैरिग्नि (सुरतप्रियोद्यद्वैरा), ज१, ज२-निगृह्यत्मयुते (निगृह्यात्महिते)

(ब) ज१, ज२-अपिपंडितांगी (पीडिताङ्गी)

१९.(अ) ज१, ज२-सत्यवती (सत्यपरा), ज१-पररंप्रगोष्ठी, ज२-पररंघ्रगोष्ठी (पररन्ध्रगोत्त्री)

(ब) ज१, ज२-राजाभिगामी (गजाभिगामिन्य), ज१, ज२-निखिलानिलर्क्षे (निलाह्वयर्क्षे)

२०.(अ) ज१, ज२-प्रसक्ता, पी.यू.धा. टीका प्रमत्ता (प्रवृत्ता), ज१,ज२-कृत्येवमोघामयवैरिसंघा, पी.यू.धा.टी.-कृत्यैवमोघामयवैरिसंघा (विचित्तमोघामयवैरिसंघा)

(ब) ज१-मुनिवशाखात्, ज२-मुनीवशाखात (शुनीव शश्वत्)

२१.(अ) ज१, मैत्रैमित्रा, ज२-मैत्रे च मित्रा (मैत्रे विमित्रा)

(ब) ज१, प्रवृत्तकोमा, ज२-प्रवृत्तकामा (प्रवृत्तरागा), ज१, ज२-संस्ताचपारींधभक्ता (स्वगर्भसंस्त्रावपरा विरक्ता)

२२.(अ) ज१, ज२-व्यमर्ष (विमर्षा), ज१, ज२-समूढा (सुगूढा)

(ब) ज१-परतयापाव्रजतेरतात्मा, ज२-परतापापाच्चजतेरतात (परंतपा प्रव्रजितेरताम्मा)

२३.(ब) ज१-गोजंगंगामिनीच, ज२-गोजगामिनी च (गोगजगामिनी च)

२४.(अ) ज१-पानीयधिष्ण्यष्वसती (पानीयभेपुष्पवती), ज१, ज२-विवादविशीर्णा (विवादशीला), ज१, ज२-कर्मापर (कलाकर्मणि)

(ब) ज१-वनसैलसक्ता, ज२-मनसैलसुक्ता (वनशैलसक्ता), ज१-प्रसन्नपापा, ज२-प्रछनयापा (प्रच्छन्नपापा)

२५.(ब) ज१, ज२-विज्ञानयुक्ता (चित्तानुरक्ता)

(ब) ज१, ज२-प्रवरगुणा (प्रचुरगुण)

(द) जर१, जर२-नगात्रागंपवाधैरमिज्ञा (गीतातोद्यवाद्ये ह्यभिज्ञा)

२७.(अ) जर१-अतिवस्त्रधन, जर२-अतिधनवसु (अतिवसुधनभाक्), जर१, जर२-भोगीमानिनी (स्यान्मानिनी)

(ब) जर१, जर२-विगतत्मय (विगतभय)

२८.(अ) मु.पु. नीत्य (नृत्य)

(स) जर१-सवर्गे, जर२-सवर्ते (शतर्क्षे)

२९.(ब) जर१, जर२-अनृतवचममर्षादुर्मगातज्जयंती (त्वनृतपरुषमन्त्रैर्दुजनान्तर्जयंती)

(स) जर१, जर२-विभवति (विचरति), जर१-चाजयादे (वाजपादे)

(द) जर१, जर२-सदनलासा (सदनवासा)

३०.(अ) जर१, जर२-भूषणैर्भूषिताङ्गी (भूषितांगीत्वभिज्ञा)

(ब) जर१, जर२-सज्जनान्मासपत्नी (सज्जनान्मानयन्ती)

(स) जर१, जर२-गीतनृव्याधवासा (गीतनृत्योद्यता सा)

३१.(अ) जर१-पौषण्येविशाला (पौष्णेविशीला)

(ब) जर१-पतिरूषदूरा, जर२-पतिपरुषदूरा (पतिपुत्रदूरा), जर१, जर२-निचेरता (नीचैरता)

३२.(अ) जर१, जर२-कार्तिके (कार्तिकेयहर्यो:), जर१, जर२-विष्टयो: (विष्ट्याम्), (ब) जर१-रजोपिरिष्टम्, जर२-रजोऽप्यरिष्टं (रजोऽप्यनिष्टम्)

३३.(ब) जर१, जर२-वासराधै (वासरेषु)

३४.(ब) जर१, जर२-मयामर्थ (तथानर्थ), जर१, जर२-वर्गेष्ट, मु.पु. वर्गेषुसौम्येषु (वर्गेष्वसौम्येषु), जर१, जर२-वरवारिनाणां (चदुर्मति:स्यात्)

३५.(स) जर१, जर२-भूरिगुणांश्चपश्चाद् (भूरिगुणं च पश्चाद्)

३६.(अ) जर१, जर२-पुष्पंतत: (तत्पुष्पंतदा)

(ब) जर१, जर२-रजोदर्शनधस्ते, पी.यू.धा.टी.-रजोदर्शनमन्यधस्रे (रजोदर्शनमिष्टमग्रे)

३७.(अ) जर१, जर२-पतिकावाशमाधाय (पतितासमाथ), जर१-शूद्रादिकाम, जर२-शूद्रादिकादि (शूद्रादिनादिक्रमात्)

(ब) जर१, जर२-छूद्रापुष्पवती (शुद्धापुष्पवती)

३७.(स) जर१, जर२-चेदुष्टेह्नि (चेद्दृष्टेऽह्नि), जर१, जर२-सलिले (सलिलौ)

(द) जर१, जर२--पंचक्लिशै: (सपंचकलशै:), जर१, जर२-समृद्रीजकै: (समृद्भिर्जलै:)

३८.(अ) मु.पु.-ऐशान्यतो (ईशानतो)

(ब) जर१-कृताक्ता, जर२-घृताका (घृताक्तां), जर१, जर२-समिक्प्रमाणं (समित्प्रमाणां), जर१, जर२-गोयत्रिचाष्टेनसहस्रसंख्यं (गायत्रिकांसाष्टसहस्रसंख्याम्)

३९.(अ) जर१, जर२-शरप्रवाणामथघहंत्री (शतप्रमाणामथवाऽघहंत्री), जर१, जर२-शुभविध्यहूितिभिस्तलाश्च (शुभैर्यवैर्व्याहृतिभिस्तिलैश्च)

(ब) जर१, जर२-तत:शुभान् (तत:सुरान्)

४०.(अ) जर१, जर२-पैतृभ, मु.पु. पैतृभ (पित्र्यम), मु.पु. सार्थ (सार्प)

(ब) मु.पु.-उत्पातपात (उत्पातपाप), ज१, ज२-नकार्यमोनामतिषिद्रलग्नं (कार्यमाधानमनिष्टलग्ने)

४१.(अ) ज१-दिवरिपपूर्वभागे (दिवापारिघपूर्वभागे)

(ब) ज१-पितृपित्रग्रेह्नि (मातृपित्रोर्मृतेऽह्नि)

४३.(अ) ज१-युतेवीक्षिते, ज२-युतिवीक्षिते (युतवीक्षिते वा)

४४.(अ) ज१, ज२-युग्मेशलग्ने (युग्मांशलग्ने)

(ब) ज१, ज२-पापसौम्य (पापरूपा)

४५.(अ) ज१, ज२-उपर्क्षांशे (ओजर्क्षांशे)

४६.(अ) ज१-पुंजन्मकारो (पुंजन्मकारी)

४७.(ब) ज१, ज२-योगेएत्यं (योगेष्वपत्यं)

४८.(अ) ज१, ज२-नवखदशतवीक्षितामिकुयति (न च दशमनिशाविवर्जनं प्रकुर्याद्)

(ब) ज१-गव्यम् (गम्यम्)

पुष्पिका: ज१-इतिश्रीवृद्धवासिष्ठ ब्रह्मऋषि विरचितायां महासंहितायामार्तवमाधान स्वमलक्षणां नाम चतुर्विशतमोध्याय:।।२४।।

ज२-इतिश्री वृद्धवासिष्ठ ब्रह्मऋषि विरचितायां महासंहितायामार्तवमाधान स्वरूप लक्षणं नाम चतुर्विशतितमोध्याय:।।२४।।

***

# अथ पुंसवन सीमन्ताध्यायः

## पुंसवन संस्कार विधान

कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा।
मासि स्फीततनौ तुषारकिरणे पुष्येऽथ वा वैष्णवे॥
हित्वा कर्कटकं नृयुग्ममबलामन्येऽप्यरिक्ते तिथौ।
शुद्धे नैधनधाम्नि शुक्रशशभृद्विन्मंत्रिणां वासरे॥१॥

गर्भ पुष्टि के अनन्तर पुंसवन संस्कार में प्रयुक्त नक्षत्र मासादि में अथवा तीसरे महीने में बलशाली शुभ लग्न में, पुष्य एवं श्रवण में चन्द्रमा विद्यमान होने पर कर्क, मिथुन, कन्या लग्न एवं रिक्ता तिथियों को छोड़कर, अष्टम भाव शुद्ध होने पर अर्थात् अष्टम भाव प॰ क्रूर ग्रहों की युति या दृष्टि न होने पर चन्द्र, बुध, गुरु तथा शुक्रवारों में पुंसवन संस्कार करना चाहिए।।१।।

## पुरुष संज्ञक नक्षत्र

पुंनाम्नि श्रवणं तिष्यः स्वाती हस्तः पुनर्वसुः।
मूलं प्रोष्ठपदं चानुराधा मृगशिरोऽश्विनी॥२॥

श्रवण, पुष्य, स्वाती, हस्त, पुनर्वसु, मूल, रेवती, अनुराधा, मृग्शिरा एवं अश्विनी ये सभी पुरुष संज्ञक नक्षत्र हैं।।२।।

**क्रमागतः–**

**कश्यपः–**

अथातः संप्रवक्ष्यामि सीमन्तोन्नयनं शुभम्।
व्यक्तगर्भे पुंसवनं कृत्वा कार्यं यथा विधिः।
मासे चतुर्थे षष्ठे वा कर्तव्यन्त्वष्टमेऽपि वा।
शुक्लपक्षादि दिवसं रिक्तां पक्षस्य मध्यमाम्॥
तिथिं त्यक्तार्कभूसूनुसुरेज्यानां च वासरे॥
पापैरसंयुतं क्षिप्र चराचरमृदुडूषु॥
पञ्चाङ्ग शुद्धि दिवसे चन्द्रतारा बलान्विते।
मासेश्वरे बलोपेते नास्तगे न पराजिते॥
आधानतो मासपाः स्युः शुक्रारेज्यार्क रात्रियाः।
सौरज्ञाऽऽधानलग्नेशचन्द्रार्कास्तद्दशात्फलम्॥
ओजांशेश्वोजराशौ च शुभग्रहायुतेक्षिते।
न नैधने तयोर्लग्ने नैधने शुद्धिसंयुते॥

पंचभिश्च चतुर्भिर्वा सूर्येन्दुगुरूपूर्वकैः।
ग्रहैरिष्टैश्शुभेलग्ने राशावपि न नैधने॥
केन्द्रत्रिकोणदुश्चिक्य धनायेषु शुभग्रहाः
शुभदास्त्रिषडायस्थाः क्रूराश्चैव शुभप्रदाः॥

—(कश्यप संहिता, अध्याय २४, श्लोक १-८)

### लग्नस्थ चन्द्रमा का फल

**चन्द्रे लग्नेऽतिसंपत्स्याच्छुभवीक्षितसंयुते।**
**सीमंतस्यापि संपत्स्यादिष्टः पुंसवनस्य यः॥३॥**

सीमन्त एवं पुंसवन संस्कार में लग्नस्थ चन्द्रमा यदि शुभ ग्रहों से युक्त या दृष्ट हो तो ऐसा चन्द्रमा प्रचुर सम्पत्ति का द्योतक होता है॥३॥

### सीमन्तोन्नयन संस्कार

**कृतसवनसतीनामाद्यगर्भे प्रसक्ते।**
**विहितमथ चतुर्थे मासि षष्ठाष्टमे वा॥**
**उडुनि शशिनि वीर्ये मासपे वीर्ययुक्ते।**
**बहुगुणयुतघस्त्रेऽप्येव सीमन्त कर्म॥४॥**

पतिव्रता स्त्रियों का प्रथम गर्भ में पुंसवन संस्कार करने के पश्चात् चतुर्थ, षष्ठ या अष्टम मास में, चन्द्रमा, ग्रह, नक्षत्र, मासाधिप बलवान हों तो ऐसे समय में सीमन्तोनयन करवाने से अत्यन्त गुण सम्पन्न सन्तान प्राप्ति होती है॥४॥

### गर्भ रक्षा विधान

**मासे मासे मासपादिग्रहाणां शांतिं कुर्याच्छांतिवाक्यैर्जपैश्च।**
**होमैर्दानैः सज्जनानां च वाक्यैर्गर्भं सम्यग्रक्षयेत्पुत्रकामी॥५॥**

प्रत्येक मास में मासों के अधिपति ग्रहों की शान्ति सूक्तों द्वारा अथवा जप, होम, दान तथा सत्पुरुषों के आशीर्वचनों का अनुपालन करते हुए पुत्र की कामना करने वाला भलीभान्ति गर्भ की रक्षा करे॥५॥

### सीमन्त का मुहूर्त्त

**ऋक्षेषु साधारणदारुणोग्रवर्ज्येषु सूर्येज्यमहीसुतानाम्।**
**वारेष्वरिक्ताक्षयपंचपर्वदिनेषु पुंलग्ननवांशकेषु॥६॥**

साधारण संज्ञक (कृत्तिका, विशाखा) दारुण संज्ञक (आर्द्रा, आश्लेषा, ज्येष्ठा, मूल), उग्र संज्ञक (भरणी, मघा, पू.फा., पू.षा., पू.भा.) नक्षत्रों को छोड़कर रवि, मङ्गल एवं गुरुवार को रिक्ता तिथियाँ (४, ९, १४) क्षय तिथि तथा

पञ्चपर्वों (कृष्णाष्टमी, चतुर्दशी, अमावस, पूर्णिमा, सूर्य संक्रान्ति) को त्यागकर पुरुष संज्ञक लग्न एवं नवांश में यह संस्कार करना चाहिए।।६।।

**क्रमागतः–**

**नारदः–**

**चतुर्थेमासि षष्ठे वाप्यष्ठमे वा तदीश्वरे।**
**बलसम्पन्नदंपत्योश्चन्द्रतारा बलान्विते।।**
**अरिक्ता पर्वदिवसे कुजजीवार्कवासरे।**
**तीक्ष्णमिश्रोग्र वर्जेषु पुंसंज्ञकभांशके शशी।**
**शुद्धेऽष्टमे जन्मलग्नात्तयोर्लग्ने न नैधने**
**शुभग्रहयुते दृष्टे पापखेटयुतेक्षिते।**
**मासेऽष्टके चतुर्भिर्वा दृष्टेऽर्के बीजपूरकैः**
**स्त्रीणां तु प्रथमे गर्भे सीमन्तोन्नयनं शुभम्।।**
**शुभग्रहेषु धीधर्म केन्द्रेष्वरिभवे त्रिषु।**
**पापेषु सत्सु चन्द्रेऽन्त्य निधनाद्यारि वर्जिते।।**
**क्रूरग्रहाणामेकोऽपिलग्नादंत्यात्मजाष्टगाः।**
**सीमन्तिनीनां सद्गर्भं बलोहन्ति न संशयः।।**

—(नारदसंहिता, अध्याय १८ श्लोक १-६)

## सीमन्त संस्कार का समय

**न नैधने नैधनशुद्धलग्ने शुभग्रहैर्युक्तनिरीक्षिते वा।**
**इष्टैः सदा पंचभिरर्कचंद्रसुरेज्यपूर्वैरथवा चतुर्भिः।।७।।**

निधनतारा, अष्टम स्थान पापाक्रान्त, पापग्रहों से युक्त, पापग्रहों से दृष्ट न होने पर अष्टम स्थान शुभग्रहों से युक्त व दृष्ट हो, सूर्य-चन्द्र, गुरु के अनुकूल होने पर चतुर्थ या पञ्चमास में सीमन्तोनयन संस्कार करना चाहिए।।७।।

**केन्द्रत्रिकोणत्रिधनायसौम्यैर्दुश्चिक्यलाभारिगतैश्च पापैः।**
**षडष्टलग्नांत्यविवर्जितेन्दौ सीमंतकार्यं शुभदं सदैव।।८।।**

केन्द्र, त्रिकोण, तीसरे, दूसरे, ग्यारहवें स्थानों में शुभ ग्रह हों, तीसरे, छठे, ग्यारहवें स्थानों में पापग्रह हों षष्ठ, अष्टम तथा लग्नांतक चन्द्रमा को छोड़कर सीमन्त संस्कार करना शुभ होता है।।८।।

**व्ययेऽष्टमे वा सुतभे विलग्ने चैकोऽपि पापोऽथ नभश्चराणाम्।**
**सीमंतिनीनाशकरस्त्ववश्यं करोति गर्भस्य च वा विनाशम्।।९।।**

व्यय, अष्ट, पाँचवें अथवा लग्न में एक भी पाप ग्रह विद्यमान हो तो सीमन्तनी गर्भिणी स्त्री को अथवा उसके गर्भ को अवश्य नष्ट करता है।।९।।

## गर्भमासाधिपति

**सिताऽऽवनेयामरपूज्यसूर्यचन्द्रार्किसूर्योदयपेंदुसूर्याः।**
**मासाधिपाः स्युः क्रमशो दशैते निपीडितो नाशयति स्वमासि॥१०॥**

गर्भमासेश्वराः– प्रथममास का स्वामी शुक्र, दूसरे का मङ्गल, तीसरे का देवगुरु, चौथे का सूर्य, पाँचवें का चन्द्रमा, षष्ठ का शनि, सातवें का बुध, अष्टम का लग्नेश, नवमें का चन्द्रमा और दशमे का सूर्य स्वामी होता है। मासीय स्वामी ग्रह अपने मास में यदि पीड़ित होता है तो गर्भ को दुःखी करता है॥१०॥

## गर्भ पुष्टि के लिए विष्णु पूजा

**रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां या सप्तमे वा तिथौ वा।**
**मध्याह्ने वा पूर्वभागेऽनुकूले विष्णोः पूजां कारयेद्गर्भपुष्ट्यै॥११॥**

रोहिणी या श्रवण नक्षत्र में शुक्लपक्ष द्वादशी या सप्तमी तिथि को मध्याह्न या पूर्वार्द्ध में शुभ समय विचारकर गर्भ पुष्टि के लिये श्री विष्णु पूजा करनी चाहिए॥११॥

**पीताम्बरं कृष्णवर्णं शंखचक्रगदाम्बुजम्।**
**वैकुण्ठवासिनं विष्णुं मृत्कुंभे विन्यसेत्ततः॥१२॥**

पीतवस्त्रधारी, श्यामवर्ण शंख, चक्र, गदा एवं पद्मधारी वैकुण्ठ निवासी श्री विष्णु जी को मृन्मय कलश पर स्थापित करना चाहिए॥१२॥

**विष्णोः स्वरूपं कनकेन कृत्वा तल्लिङ्गमन्त्रैरथ गन्धपुष्पैः।**
**वस्त्राक्षतैर्गुग्गुलगन्धदीपैर्नैवेद्यतांबूलफलैश्च सम्यक्॥१३॥**

श्रीविष्णु भगवान् की स्वर्णमयी मूर्ति बनाकर श्रीविष्णुचिह्न एवं मन्त्रों द्वारा गन्ध, पुष्प, वस्त्र, अक्षत, गुग्गल, गन्धदीप, ताम्बूल, नैवद्य एवं फलों द्वारा–॥१३॥

**विष्णुं च देवतापूज्यं गर्भाणां रक्षणाय च।**
**ब्राह्मणेभ्यः प्रदातव्या प्रतिमा वस्त्रसञ्युता॥१४॥**

गर्भों की रक्षा के लिए भगवान् श्रीविष्णु की पूजा करके स्वर्णमूर्ति को वस्त्रों सहित ब्राह्मणों को दे देनी चाहिए॥१४॥

## भगवान् विष्णु के द्वादश नाम

**चैत्रादिमासनामानि वैकुंठोऽथ जनार्दनः।**
**उपेन्द्रो यज्ञपुरुषो वासुदेवस्त्रिविक्रमः॥१५॥**

चैत्रादि मासों के नाम क्रमशः वैकुण्ठ, जनार्दन, उपेन्द्र, यज्ञपुरुष, वासुदेव, त्रिविक्रम–॥१५॥

**योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा।**
**चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः॥१६॥**

योगीश, पुण्डरीकाक्ष, कृष्ण, अनन्त, अच्युत एवं चक्रधारी चैत्रादि मासों के नाम ऋषियों द्वारा कहे गये हैं॥१६॥

**तद्व्यक्षरं वा चतुरक्षरं वा विवर्जयेच्चान्त्यलकाररेफम्।**
**तन्मासनामादिकमेव चिन्त्यं स्फुटं वदेद्दक्षिणकर्णरन्ध्रे॥१७॥**

**इतिश्री ब्रह्मर्षि वृद्धवसिष्ठ विरचितायां संहितायां**
**पुंसवनसीमन्ताध्यायः पञ्चविंशः॥२५॥**

द्वयक्षर अथवा चतुरक्षर, लकारें एवं रेफ युक्त नामोच्चारण न करके जातक के जन्ममासानुसार विचार करके भलीभान्ति जातक के दक्षिण कान के छिद्र में नाम उच्चारण करें॥१७॥

वृद्धवसिष्ठ संहिता के पुंसवनसीमन्ताध्याय की 'नारायणी' हिन्दी टीका सम्पूण॥२५॥

**पाठान्तरम्**

०१(द) जश-नैधनधात्रि, ज२-नैधनधन्य (नैधनधाम्नि), ज१, ज२-शुकशशिमृद् (शुक्रशशभृद)
०२(अ) ज१-पुंसास्त्रि, ज२-पुत्राम्नि (पुंनाम्नि), ज१, ज२-पुष्यस्वाता (तिष्यः स्वाती)
(ब) ज१-मृगशिराश्विनी, ज२-मृगाश्विनी (मृग्शिरोऽश्विनी)
०३(अ) ज१, ज२-भृगुवीक्षित (शुभवीक्षित)
(ब) ज१-संपत्स्याविष्टः, ज२-संपत्स्यादृष्टः (संपत्स्यादिष्टः)
०४(अ) ज१-कृतवस्त्रनवसतिनाम, ज२-कृतवसुनवसतीनां (कृतसवनसतीनाम्), ज१-प्रसवंस्वन, ज२-प्रवेशं वंखन (प्रसक्ते)
(ब) ज१-विहितापर, ज२-निहितापर (विहितमथ)
(स) ज१-उद्गुनि (उडुनि)
(द) ज१-बहुगुणयुतमासेण्येव, ज२-वहुगुणयुतमासेसौम्ये (बहुगुणयुतघस्नेऽप्येव)
०६(ब) ज१-लग्नेनतांसकेवा (पुंलग्नवांशकेषु)
०७(ब) ज१-चतुर्मिः (चतुर्भिः)
०९(अ) ज१, ज२-पापश्च (पापोऽथ)
(ब) ज१, ज२-गर्भत्वथवा (गर्भस्य च वा)
१०(अ) ज१, ज२-सितावनेयामर (सिताऽऽवनेयामर)
(ब) ज१-स्वमास, ज२-स्वमासे (स्वमासि)
११(अ) ज१, ज२-वैष्नवा (वैष्णवे)
(ब) ज१-मध्येचाहुः, ज२-मध्येनाहूः (मध्याह्ने), ज१, ज२-कुजाः कारयेद् (पूजां कारयेद्), ज१, ज२-गर्भपुष्टी (गर्भपुष्ट्यै)

१२(ब) ज.मो. चिन्तयेततत: (विन्यसेत्तत:)

१३(अ) ज.मो. विष्णोश्चरूपं (विष्णो: स्वरूपं)

१४(अ) ज१, ज२-विष्णोवद्देवतां पूजां (विष्णुं च देवता पूज्यं)

१६(अ) ज१, ज२-पुंडरीकाक्षो (पुण्डरीकाक्ष:)

(ब) ज१-क्रमांद्रम्भनीषिणा:, ज२-क्रमादाद्धर्म्भनीषिणां (क्रमादाहुर्मनीषिण:)

१७(ब) ज१-दक्षिणार्णरन्ध्रे (वदेद्दक्षिणकर्णरन्ध्रे)

पुष्पिका: ज१-इतिश्रीवृद्धवसिष्ठब्रह्मर्षि विरचितायां महासंहितायां पुंसवनं सीमंतस्वरूपलक्षणं नाम पंचविंशतमोध्याय:।।२५।।

ज२-इतिश्री वृद्धवासिष्ठ ब्रह्मर्षि विरचितायां महांसहितायां पुंसवनसीमन्त स्वरूप लक्षणं नाम पंचविंशतमोध्याय:।।२५।।

***

२६

# अथ जातकर्मनामकर्माध्यायः

## जातकर्म विधान

**यस्मिन्मुहूर्ते जनितः कुमारस्तस्मिन्विधेयं खलु जातकर्म।**
**विनिर्गते वाऽप्यथ सूतकेऽपि तस्मिन्दिने तस्य च नामधेयम्॥१॥**

जिस मुहूर्त्त में बालक का जन्म होता है, उसी मुहूर्त्त में जातक कर्म करना चाहिए अथवा सूतक की निवृत्ति हो जाने पर नामकरण के साथ करना चाहिए॥१॥

**संतर्प्य देवान्सपितृन्द्विजांश्च सुवर्णगोभूतिलधान्यवस्त्रैः।**
**गुडाज्यरौप्यैर्लवणैश्च होमैरक्षोघ्नमन्त्रैः सह जातकर्म॥२॥**

देवताओं एवं पितरों का तर्पण करके ब्राह्मणों को स्वर्ण, गौ, भूमि, तिल, धान्य, वस्त्र, गुड़, घी, चान्दी तथा नमक का दान देकर 'रक्षोघ्न' मन्त्रों के साथ जातकर्म करना चाहिए॥२॥

क्रमागतः–

नारदः–

तस्मिन्जन्म मुहूर्तेऽपि सूतकान्तेऽपि वा शिशोः।
जातकर्म प्रकर्त्तव्यं पितृपूजनपूर्वकम्॥१॥

—(ना.सं. १९ अ. श्लोक १)

कश्यपः–

अथातः संप्रवक्ष्यामि जातकर्म शिशोस्तथा।
जन्मकालेऽपि कर्त्तव्यं सूतकान्तेऽपिवा ततः॥

—(क.सं., अ. २५, श्लोक १)

## जातकर्म का विशेष मुहूर्त्त

**अतीतकार्य्याण्यखिलानि तानि कार्याणि सौम्यायनगे दिनेशे।**
**सिते गुरौ वाप्यथ दृश्यमाने तदुक्तपञ्चाङ्गदिनेऽप्यखण्डे॥३॥**

जातककर्मादि जो कार्य किसी कारणवश नहीं हो सके हों ऐसे शुभ मङ्गल कार्यों को सूर्य उत्तरायण आने पर शुक्लपक्ष में, बृहस्पति एवं शुक्र उदित हों, क्षय तिथि को छोड़कर पञ्चाङ्गस्थ शुभ मुहूर्त्त में करना चाहिए॥३॥

## जातकर्म नामकरण में प्रयुक्त नक्षत्र

**मृदुध्रुवक्षिप्रचरेषु भेषु चारिक्तपर्वाख्यादिनेषु कार्यम्।**
**शुभग्रहाणां दिनलग्नवर्गे तज्जातकर्म त्वथ नामधेयम्॥४॥**

इति श्री ब्रह्मर्षि वृद्धवसिष्ठ विरचितायां संहितायां जातकर्म नामकर्माध्यायः षड्विशः॥२६॥

मृदु संज्ञक नक्षत्रों में (रेवती, चित्रा, मृगशिरा अनुराधा), ध्रुवसंज्ञक (रोहिणी, उ.फा., उ.षा., उ.भा.), क्षिप्रसंज्ञक, चरसंज्ञक (पुष्य, अश्विनी, हस्त, अभिजित्) पर्वदिनों (कृष्णाष्टमी, चतुर्दशी, अमावस, पूर्णिमा एवं सूर्य संक्रान्ति), रिक्ता तिथियों (४, ९, १४) को छोड़कर शुभग्रहों के वारों, लग्न तथा वर्ग में जातक कर्म एवं नामकरण करना चाहिए।।४।।

**क्रमागतः-**

**नारदः-**

**चरस्थिर-मृदुक्षिप्र नक्षत्रे शुभवासरे।**
**चन्द्रताराबलोपेते दिवसे च शिशोः पिता।।**
**शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते।**
**लग्नेन्त्यनैधने सौम्ये संयुते वा निरीक्षिते।।**

—(ना.सं.अ.२०, श्लोक ३-४)

**कश्यपः-**

**शुभलग्ने शुभांशे च शुभेऽह्नि शुभवासरे।**
**चन्द्रतारा बलोपेता नैधनोदय वर्जिते।**
**पूर्वाह्ने क्षिप्रनक्षत्र चरस्थिरमृदूडुषु**
**नाम मङ्गलघोषैश्च रहस्यं दक्षिणेश्रुतौ।।**

—(क.सं.अ. २५ श्लोक ५-६)

**वृद्धवसिष्ठ संहिता के जातकर्म नामकर्माध्याय की 'नारायणी' हिन्दी टीका सम्पूर्ण।।२६।।**

**पाठान्तरम्**

१(अ) जर, जर-अस्मिन्मुहूर्त्ते (यस्मिन्मुहूर्त्ते), ज१, ज२-जनिते (जनितः), ज१, ज२-कुमारे (कुमारः)

१(ब) ज१, ज२-विभागेवामेऽप्यथ, ज.मो. विनिर्गमेवाप्यथ (विनिर्गतेवाऽप्यथ)

२(अ) ज१-मूतिलकां, ज.मो. मूतिलकांस्थवस्त्रैः (भूतिलधान्यवस्त्रैः)

२(ब) ज१, ज२-कुंडाज्य (गुडाज्य)

३(अ) ज१, ज२-दिनेशः (दिनेशे)

३(ब) ज१, ज२-चाप्यत्रवास्तमाने (वाप्यथदृश्यमाने)

३(ब) मु.पु. खण्डम् (खण्डे)

४(अ) मु.पु. मैत्रध्रुव (मृदुध्रुव), ज१, ज२-मूलेमेष्वष्वरिक्तापर्वा च दिनेषु (भेषुचारिक्तपर्वाख्यदिनेषु)

पुष्पिकाः - ज१- इति श्री वृद्धवासिष्ठ ब्रह्मर्षि विरचितायां महासंहितायां जातकर्म स्वरूपलक्षणं नाम षड्विंशतमोऽध्यायः।।२६।।

ज२-इतिश्रीवृद्धवसिष्ठब्रह्मर्षि विरचितायां महासंहितायां जातकर्म्म स्वरूपलक्षणं नाम षड्विंशोध्यायः।।२६।।

***

# अथान्नप्राशनाध्यायः

## अन्नप्राशन का समय

**युग्मेषु मासेषु च षष्ठमासात्संवत्सरे वा नियतं शिशूनाम्।**
**अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत्।।१।।**

छः मासों के पश्चात् सममासों में वर्ष पर्यन्त बालकों का तथा कन्याओं का विषम मासों में अन्नप्राशन करना कल्याणप्रद होता है।।१।।

क्रमागतः–

कश्यपः–

अथातः संप्रवक्ष्यामि नवान्नप्राशनं शिशोः।
मासे षष्ठाष्टमे वाऽपि दशमे वाऽपि वत्सरे।।
द्वादश्यामाष्टमी रिक्तानन्दाचैव दिनक्षयम्।
सूर्यार्कि भौमवारश्च त्यक्तान्य वासरे।।
चरस्थिरमृदुक्षिप्रनक्षत्रेषु शुभेदिने।
अदुर्दिने च पूर्वाह्ने चन्द्रतारा बलान्विते।।
शुभलग्ने शुभांशे च दशमे शुद्धि संयुते।
जन्मराशि विलग्नाभ्यां नैधनेऽशे विवर्जिते।।

नारदः–

षष्ठेमास्यष्टमेवापि पुंसां स्त्रीणां तु पञ्चमे।
सप्तमे मासि च कार्यं नवान्नप्राशनं शुभम्।।
रिक्तां दिनक्षयं नन्दा द्वादशीमष्टमीममाम्।
त्यक्त्वान्य तिथयः श्रेष्ठाः प्राश्ने शुभवासरे।।
चरस्थिरमृदुक्षिप्रनक्षत्रे शुभनैधने।
दशमे शुद्धिसञ्युक्ते शुभलग्ने शुभांशके।।
पूर्वाह्ने सौम्यखेटेन सञ्युक्ते वीक्षितेऽपि वा।
त्रिषष्ठलाभगैः क्रूरैः केन्द्रधीधर्मगैः शुभैः।।

—(ना.सं.अ. २१, श्लोक १-४)

गर्गः–

युग्मेषुमासेषु च षट्सु पुंसां संवत्सरे वा नियतं शिशुनाम्।
अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत्।।
षष्ठादियुग्ममासेषु शिशूनामन्नभोजनम्।
कन्यानां पञ्चमान्मासादयुग्मेभोजनंस्मृतम्।।

—(वृहद् दैवज्ञरञ्जनम् पृ.सं. ११६, अ. ६३, श्लोक ८-९)

### अन्नप्राशन मुहूर्त्त

मृदुध्रुवक्षिप्रचरेषु भेषु वारेषु शुक्रज्ञसुरार्चिताभ्याम्।
धर्मार्कगौरीद्विहिधातृकामदिनेषु तारेन्दुबलान्वितेषु॥२॥

मृदुसंज्ञक, ध्रुवसंज्ञक, क्षिप्रसंज्ञक एवं चरसंज्ञक नक्षत्रों में शुक्रवार, बुधवार, बृहस्पति वारों में दशमी, सप्तमी, तृतीया, पूर्णिमा, पञ्चमी, द्वितीया, त्रयोदशी तिथियों में चन्द्रताराबल अनुकूल होने पर बालक-बालिकाओं को अन्नप्राशन करवाए॥२॥

शुभग्रहाणां भवने विलग्ने नवांशके पूर्वदले दिनस्य।
पूर्णेन्दुवारेऽप्यथवा विलग्ने नवांशके वाप्यथवा नु तस्य॥३॥

शुभग्रहों की राशि या नवांश लग्न में हों, दिन के पूर्वार्द्ध में, पूर्ण चन्द्रमा के दिन (पूर्णिमा), या पूर्ण चन्द्रमा लग्न या नवांश में हो तो अन्नप्राशन संस्कार कल्याणप्रद होता है॥३॥

न नैधने कर्मविशुद्धियुक्ते दोषैर्विहीनैः शुभदृष्टियुक्ते।
नोत्पातपापग्रहदूषितर्क्षे वैनाशिकाद्यर्क्षविवर्जितेषु॥४॥

निधन तारा को त्याग कर, दशम स्थान शुद्ध एवं दोष रहित होने पर, दशम स्थान पर शुभग्रहों की दृष्टि एवं युति सम्बन्ध होने पर, उत्पात रहित, पापग्रहों द्वारा दूषित नक्षत्र न होने पर, आदि वैनाशिक नक्षत्रों से रहित—॥४॥

चौलान्नभुक्तौ व्रतबंधने च राज्याभिषेके खलु जन्मधिष्ण्यम्।
शुभं त्वनिष्टं सततं विवाहसीमन्तयात्रादिषु मंगलेषु॥५॥

चूड़ाकर्म, अन्नप्राशन, व्रतबन्ध, राजाभिषेक में जन्मनक्षत्र प्रशस्त होता है, परन्तु विवाह सीमन्त यात्रा इत्यादि मङ्गल कार्यों में निरन्तर अनिष्टप्रद होता है॥५॥

शुभाशुभेषु त्रिधनायकेन्द्रत्रिकोणगेष्वायरिपुत्रिगेषु।
अषष्ठरिष्फाष्टगते हिमांशौ बालान्नभुक्तिः शुभदा च तेषाम्॥६॥

शुभाशुभ ग्रह जब तीसरे, दूसरे, लाभ केन्द्रस्थान, त्रिकोण स्थान अथवा सभी ग्रह लाभ, छठे या तीसरे गये हुए हों, चन्द्र छठे, बारहवें तथा आठवें में न हो तो बालकों के लिए अन्नप्राशन शुभप्रद होता है॥६॥

### अन्नप्राशन में सूर्यादि ग्रहों का प्रभाव

कुष्ठी लग्नगते सूर्ये क्षीणे चंद्रे च भिक्षुकः।
सत्रदः पूर्णचन्द्रे च कुजे पित्तरुजार्दितः॥७॥

अन्नप्राशन संस्कार में सूर्य लग्न में हों तो कुष्ठि रोग। चन्द्रमा निर्बली हो

तो भिखारी, पूर्ण चन्द्रमा हो तो उत्तम अन्न की प्राप्ति तथा मङ्गल हो तो पित्त रोग से पीड़ित करता है।।७।।

**बुधे ज्ञानी गुरौ भोगी दीर्घायुर्भोगवान् सिते।**
**वातरोगी शनौ राहौ केतौ चान्नविवर्जितः।।८।।**

बुध लग्न में हो तो ज्ञानी, गुरु हो तो भोगी, शुक्र हो तो दीर्घायु तथा भोगप्राप्ति, शनि होने पर वायु विकार, राहु या केतु होने पर अन्न से रहित होता है।।८।।

**चन्द्रमा की संज्ञा**

**संपूर्णेदूभयाष्टम्योर्मध्येन्दुः पूर्णसंज्ञकः।**
**विनष्टेंदूभयाष्टम्योर्मध्येऽसौ क्षीणसंज्ञकः।।९।।**

पूर्णिमा तिथि के दोनों ओर अष्टमी पर्यन्त चन्द्रमा पूर्ण संज्ञक, अमावस के दोनों ओर अष्टमी पर्यन्त क्षीण संज्ञक होता है।।९।।

**षष्ठाष्टमांत्यगश्चन्द्रो भोक्तुश्च निधनप्रदः।**
**केन्द्रत्रिकोणगो मन्दस्तस्यान्नमपहारकः।।१०।।**

**इति श्री ब्रह्मर्षि वृद्धवसिष्ठ विरचितायां संहितायां अन्नप्राशनाध्यायः सप्तविंशः।।२७।।**

चन्द्रमा षष्ठ, अष्टम तथा द्वादश में हो अन्नप्राशन वाले बच्चे के लिए मृत्युप्रद, केन्द्र त्रिकोण में बैठा शनि अन्न अपहरण करता है।।१०।।

वृद्धवसिष्ठसंहिता के अन्नप्राशनाध्याय की 'नारायणी' हिन्दी टीका सम्पूर्ण।।२७।।

**पाठान्तरम्**

१(अ) जर१, जर२-षष्ठपुंसां (षष्ठमासात्)
२(ब) जर१-कर्मदिनेषु, जर२-कर्म्मदिनेषु (कामदिनेषु)
३(अ) जर१, जर२-भुवने (भवने)
३(ब) जर१, जर२-तदंशके (नवांशके), जर१, जर२-पूर्वदलेदिनस्थ (वाप्यथवा नु तस्य)
४(ब) जर१, जर२-वैनासिकावृक्षे (वैनाशिकाद्यर्क्ष)
५(अ) जर१, जर२-वालान्नमुक्ते (चौलान्नभुक्तौ)
५(ब) जर१, जर२-विवाहे (विवाह)
७(अ) जर१-कुष्टे, जर२-कुष्ठ (कुष्ठी)
७(ब) जर१, जर२-कुजेपैत्तरूजार्दितः (कुजे पित्तरूजार्दितः)
८(ब) जर१-चान्नविवजित, जर२-चार्न्नविवर्जितः (चान्नविवर्जितः)
१०(अ) जर१, जर२-षष्टाष्टमास्यगान्चन्द्रो (षष्ठाष्टमांत्यगश्चन्द्रो)
पुष्पिका :- जर१-इतिश्रीवृद्धवासिष्ठब्रह्मऋषि विरचितायां महासंहितायां अन्नप्राशनलक्षणं नाम सप्तविंशतमोध्यायः।।२७।।
जर२-इतिश्रीवृद्धवसिष्ठब्रह्मऋषि विरचितायां महासंहितायांमन्नप्राशनलक्षणं नाम सप्तविंशतमोध्यायः।।२७।।

***

२८

# अथ चौलाध्यायः

## चौल कर्म विधान

**तृतीये पंचमेऽब्दे वा स्वकुलाचारतो हितम्।**
**चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः॥१॥**

तीसरे या पाँचवें वर्ष में तथा कुल परम्परा के अनुसार बालकों का मुण्डन (चौल) संस्कार हितकर होता है। बालकों का मुण्डन-संस्कार प्रयत्नों से अपने-अपने ग्रहसूक्तों के विधान से ही करवाना चाहिए॥१॥

**आधानतो जन्मतो वा सप्तमेऽब्देऽपि कारयेत्।**
**कृत्वाभ्युदयिकं कर्म पश्चात्सर्वं समाचरेत्॥२॥**

गर्भाधान से अथवा जन्म से सातवें वर्ष में भी मुण्डन-संस्कार करवाना चाहिए। हर प्रकार से उन्नतिपरक पूजा विधान के पश्चात् मुण्डन सम्बन्धी सभी कृत्यों को करना चाहिए॥२॥

**क्रमागतः-**
**नारदः-**

---

तृतीये पंचमाब्दे स्वकुलाचारतोऽपिवा।
बालानां जन्मतः कार्यं चौलमावत्सरत्रयात्।
सौम्यायने नास्तगयोरसुरासुरमंत्रिणैः।
अपर्वरिक्ता तिथिषु शुक्रेज्ञेज्येन्दुवासरे॥

**कश्यपः-**

—(ना.सं.अ. २२, श्लोक १-२)

अथातः संप्रवक्ष्यामि वालानां चौलकर्म यत्।
तृतीयेवत्सरे वाऽपि पञ्चमाब्देऽपिजन्मतः॥
स्वकुलाचारतः कार्यमुत्तरायने रवौ।
असुरेज्ये सुरेज्ये नास्तगे न च वृद्धगे॥
पञ्चपर्व तिथिरिक्ता व्यक्तान्यदिवसेषुच
चन्द्रज्ञजीवशुक्राणां वार लग्नांशकेषु च॥
सौम्यायने गुरौ शुक्रे दृश्यमाने शुभे दिने।
चन्द्रताराबलोपेते शुभलग्ने शुभांशके॥३॥

सूर्य उत्तरायण में हो, बृहस्पति शुक्र उदय हों, शुभ दिन में चन्द्रताराबल अनुकूल होने पर शुभलग्न अथवा शुभ नवांश में मुण्डन कर सकते हैं।।३।।

### माता गर्भवती होने पर मुण्डन विचार

**गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म च।**
**पञ्चमासादधः कुर्यात्तदूर्द्ध्वं न च कारयेत्।।४।।**

माता पुनः गर्भवती हो तो पहले बालक का चौलकर्म नहीं करना चाहिए, परन्तु गर्भ यदि पाँच महीनों से कम हो तो मुण्डन कर सकते हैं। पाँच मासों से गर्भ अधिक हो तो मुण्डन नहीं करने चाहिए।।४।।

**गृहनिर्माणमुदधिस्नानं चौलं सुतस्य च।**
**तीर्थयात्रा न स्वश्मश्रु न कुर्याद्गर्भिणीपतिः।।५।।**

गृहनिर्माण, समुद्र स्नान, अपने बालक का मुण्डन-संस्कार, तीर्थ यात्रा तथा दाढ़ी-बाल बनवाने का कार्य गर्भणी के पति को नहीं करना चाहिए।।५।।

**पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत्।**
**विपद्यते गुरुश्चैव दम्पती शिशुरब्दतः।।६।।**

पुत्र के चौल-संस्कार में यदि माता गर्भवती होती है तो गुरु, दम्पती एवं शिशु को एक वर्ष के भीतर विपत्ति होती है।।६।।

**गर्भिण्यां मातरि शिशोश्चौलकर्म न कारयेत्।**
**शताभिषेकेऽप्येवं स्यात्काले वेदकृतेष्वपि।।७।।**

गर्भिणी माता को अपने शिशु का चौलकर्म नहीं करवाना चाहिए। सौ वार रुद्राऽभिषेक के साथ-साथ वेदोक्त सम्पूर्ण विधियों के करने पर भी मुण्डन नहीं होने चाहिए।।७।।

### सभी वर्णों के लिए चूड़ाकर्म

**सर्वेषामेव वर्णानां चूडाकर्मविधिः स्मृतः।**
**केशमूलं पिता ज्ञेयः केशाग्रं जननी तथा।।८।।**

सभी वर्णों के लिए चूड़ाकर्म विधि कही गई है। केशों का मूल पिता तथा अग्रभाग माता को समझना चाहिए।।८।।

### मुण्डन-संस्कार की महत्ता

**चौलेनैवायुषो वृद्धिःकेशेनैवायुषः क्षयः।**
**तस्माच्चौलं प्रयत्नेन कारयेद्बुद्धिसत्तमः।।९।।**

मुण्डन-संस्कार आयु वृद्धिप्रद है। गर्भकेश रखने से आयुक्षय भी होता है अतः यह मुण्डन-संस्कार बुद्धिजीवियों को विधिपूर्वक श्रद्धा से आयुवृद्धि के लिए करना चाहिए।।९।।

## मुण्डन में प्रयुक्त तिथियाँ एवं नक्षत्र

**पञ्चमी सप्तमी चैव दशम्यैकादशी तथा।**
**त्रयोदशी तृतीया च चौलकर्मणि शोभना।।१०।।**

पञ्चमी, सप्तमी, दशमी, एकादशी, त्रयोदशी एवं तृतीया तिथियाँ चौलकर्म (मुण्डन) में श्रेयस्कर हैं।।१०।।

**विधातृद्वितये सार्पात् त्रितये च चतुष्टये।**
**अदितिद्वितये पौष्णाद्वितये श्रवणत्रये।।**
**धर्मादर्शदिने चौलमश्रेष्ठं कृष्णाद्यवासरे।**
**हस्ताच्च त्रितये शाक्रे सेन्दवे चौलमीरितम्।।११।।**

रोहिणी, मृग्शिरा, आश्लेषा, मघा, पू.फा., उ.फा., पुनर्वसु, पुष्य, रेवती, अश्विनी, श्रवण, धनिष्ठा, शतभिषा, हस्त, चित्रा, स्वाति तथा ज्येष्ठा नक्षत्र में चन्द्रमा होने से चौल कर्म शुभफलप्रद है, परन्तु दशमी, अमावस एवं कृष्ण प्रतिपदा चौल कर्म में शुभ नहीं।।११।।

क्रमागतः-

नारदः-

दस्रादितीज्य चन्द्रेन्द्रपूषा भानि शुभान्यतः
चौलकर्माणि हस्तर्क्षात्त्रीणि च विष्णुभात्।।
पट्टबन्धनचौलान्नप्राशने चौपनयने।
शुभदं जन्मनक्षत्रमशुभंत्वन्यकर्मणि।।

—(ना.सं.अ. २२, श्लोक ३-४)

कश्यपः-

दस्रेन्ददिति पुष्येन्द्रभेषु हस्तत्रयेषु च।
विष्णुत्रयेषु पौष्णे च चौलकर्मशुभप्रदम्।।
पञ्चाङ्गशुद्धि दिवसे चन्द्रताराबलान्विते।
नैधने शुद्धि संयुक्ते लग्नराशौ न नैधने।
षष्ठाष्टान्त्यगे चन्द्रे पापेष्वायत्रिशत्रुषु
चतुष्ट्य त्रिकोणेषु संशुद्धि द्वित्रिषु शुभेषु च।।

—(क.सं.अ. २७, श्लोक ४-६)

चंद्रशुक्रगुरुज्ञानां वारलग्नांशका: शुभा:।
एवं सम्यग्विचार्याथ चौलकार्यं च कारयेत्॥१२॥

इति श्री ब्रह्मर्षि वृद्ध वसिष्ठ विरचितायां संहितायां चौलाध्यायोऽष्टविंश:॥२८॥

सोम, शुक्र, बृहस्पति तथा बुधवार शुभ लग्न एवं नवांश का विचार करके मुण्डन करवाना चाहिए॥१२॥

वृद्ध वसिष्ठ संहिता के चौलाध्याय की 'नारायणी' हिन्दी टीका सम्पूर्ण॥२८॥

**पाठान्तरम्**

१(अ) जर१, जर२-स्वकुलाचारमोहितं (स्वकुलाचारतो हितम्)
२(ब) जर१, जर२-कृत्वाभ्युदैकं कर्माधं (कृत्वाभ्युदयिकं कर्म)
४(अ) जर१-तथालंसूनौप्रेतस्यवाहनं-पाठभेदोऽस्ति, जर२-गर्भेमातुकुमारस्य न नकुर्याच्चैलं कर्म च (गर्भे मातु: कुमारस्य न कुर्याच्चौलकर्म च)
४(ब) जर१-पाठोनास्ति, जर२-कुर्यदितर्ध्वे न कारयेत् (कुर्यात्तदूर्द्ध्वं न च कारयेत)
५(अ-ब) पाठोनास्ति
व, ज.मो. नरवश्मश्रु ( न स्वश्मश्रु)
६(अ) प्र.पा.-पुत्रचूडाकर्मिणी (पुत्रचूडाकृतौ)
६(ब) जर१, जर२-शिशुरावृत: (शिशुरब्दत:)
७(अ) जर१, जर२-राजभिषेकप्येवं (शताभिषेकेऽप्येवं)
७(ब) जर१-वेदश्चतेष्वपि, जर२-वेदश्चतेश्वपि, ज.मो. वेदव्रतेष्वपि (वेदकृतेष्वपि)
८(अ) जर१-केशग्री, जर२-केशाग्नी, ज.मो. केशाग्रि (केशाग्रं)
९(अ) केसेनवायुषो, जर२-केशैनवायुशो मु.पु. चौलेनैवायुष: (केशेनैवायुष:)
१०(अ) जर१, जर२-पंचमेसप्ते (पञ्चमी सप्तमी)
१०(ब) जर१, जर२-चौलकर्मशुभावहा (चौलकर्मणि शोभना)
११(अ) जर१, जर२-विधानृद्धितपे (विधातृद्वितये)
११(स) जर१-श्रवणत्रयं (श्रवणत्रये)
११(द) मु.पु.-चौलं श्रेष्ठं (चौलमश्रेष्ठं)
१२(अ) जर१-चन्द्रशुक्रगुरुक्षानां (चंद्रशुक्रगुरुज्ञानां)

पुष्पिका:- जर१- श्रीवृद्ध वसिष्ठ ब्रह्मऋषि विरचितायां महासंहितायां चौलकर्मविधिनामाष्टाविंशतमोध्याय:॥२८॥
जर२-इतिश्री वृद्धवसिष्ठ ब्रह्मऋषि विरचितायां महासंहितायां चालकर्म विधिनामष्टाविंशतमोध्याय:॥२८॥

***

# २९

# अथोपनयनाध्यायः

### उपनयन में लग्न शुद्धि ज्ञान

**श्रुतिस्मृतीनां पदमुत्तमं द्विजस्तदुत्तमत्वं व्रतबन्धलग्नतः।**
**तस्माद्विजानां तदवाप्तिकारणं तल्लग्न शुद्धिं कथयामि शास्त्रतः॥१॥**

### नारायणी टीका

वेदों एवं स्मृतियों में ब्राह्मण का स्थान सर्वोत्तम है और उससे भी उत्तम व्रतबन्ध (जनेऊ यज्ञोपवीत) होता है! व्रतबन्ध लग्न यदि शुद्ध हो तो व्रतबन्ध और भी उत्तम हो जाता है। इसलिए ब्राह्मणों को यज्ञोपवीत की प्राप्ति के कारण ज्योतिष शास्त्रानुसार यज्ञोपवीत धारण करने के लिए लग्नशुद्धि का वर्णन कर रहा हूँ॥१॥

**क्रमागतः–**

**कश्यपः–**

अथातः सम्प्रवक्ष्यामि चोपनयनमुत्तम्।
द्विजत्वकरणं श्रौतस्मार्तकर्म प्रसाधनम्॥

*—(क. सं. अ. २८ श्लोक १)*

### मौंजीबन्धन में समय विशेष

**मौंजीबन्धः शस्यते ब्राह्मणानां गर्भाधानाज्जन्मतो वाष्टमेऽब्दे।**
**भूमीशानामेवमेकादशाब्दे वैश्यानां च द्वादशे वेदविद्भिः॥2॥**

ब्राह्मणों का व्रतबन्ध गर्भ से या जन्म से आठवें वर्ष में, क्षत्रियों का एकादश वर्ष में, वैश्यों का बारहवें वर्ष में होना चाहिए ऐसा वेद को जानने वालों का मत है॥२॥

**क्रमागतः–**

**नारदः–**

आधानादष्टमे वर्षे जन्मतो वाग्रजन्मनाम्।
राज्ञामेकादशे मौञ्जी बन्धनं द्वादशे विशाम्।
आजन्मात्पञ्चमे वर्षे वेदशास्त्रविशारदः।
उपनीतो यतःश्रीमान् कार्यं तत्रोपनायनम्॥

*—(नारद संहिता, अध्याय २४, श्लोक १-२)*

**कश्यपः–**

गर्भाष्टमेऽब्दे विप्राणां जन्मतो वा महीभुजाम्।
एकादशे वैश्यानां द्वादशे व्रतबन्धनम्॥

ऋतुवशात् उपनयनम्

**विप्राणामुपनयनं वसन्तसमये धराधिनाथानाम्।**
**ग्रीष्मर्तौ शरदिविशां मासाः साधारणाः पञ्च माघाद्याः।।३।।**

ब्राह्मणों का उपनयन-संस्कार बसन्त ऋतु में, क्षत्रियों का ग्रीष्म ऋतु में, वैश्यों का शरद् ऋतु में, साधारण लोगों का माघादि पाँच मासों में करना चाहिए।।३।।

**क्रमागतः-**

**नारदः-**

शरद् ग्रीष्म वसन्तेषु व्यतक्रमात्तु द्विजन्मनाम्।
मुख्यं साधारणं तेषां तपो मासादि पंचसु।।

*—(ना. सं. अध्याय २४, श्लोक -५)*

**कश्यपः-**

ऋतौ वसन्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथा।
विशांमुख्यश्च सर्वेषां द्विजानां चोपनायनम्।।
साधारणं च मासेषु माघादिषु च पञ्चसु।
प्रशस्तं शुक्ल पक्षेऽपि कृष्णे प्रतिपदादिषु।।
चतुर्थीं सम्परित्यज्य दिवसेषु च पंचसु।
द्वितीया च तृतीया च पंचमी सप्तमी तथा।।
त्रयोदशी च दशमी प्रशस्तास्तिथयो व्रते।
द्वादश्येकादशी षष्ठी कृष्णे युताश्च मध्यमाः।।

*—(क. सं., अ. २८, श्लोक ८-११)*

शाखेश निर्णय

**ऋग्यजुः सामशाखेशा गुरुशुक्रधरात्मजाः।**
**अथर्वणस्य वेदस्य शाखेशश्चन्द्रनन्दनः।।४।।**

ऋग्वेद शाखा का स्वामी देवगुरु बृहस्पति, यजुर्वेद शाखा का स्वामी शुक्र, सामवेद शाखा का स्वामी मङ्गल तथा अथर्वण शाखा का स्वामी चन्द्र नन्दन बुध है।।४।।

**क्रमागतः-**

**कश्यपः-**

जीवशुक्रकुजज्ञाश्च ऋग्वेदाद्याधियाः क्रमात्।
सौम्यायनेऽति शस्तं वच्चैत्रे मीनस्थिते रवौ।।

*—(क. सं., अ० २८, श्लोक ७)*

**शाखेशगुरुशुक्राणां प्रौढ्ये वाल्ये च वार्द्धके।**
**नैवोपनयनं कार्यं वर्णेश दुबलेऽपि च।।5।।**

शाखा का स्वामी, बृहस्पति और शुक्र जब प्रौढ़ बाल्य या वार्धक्य अवस्था में हों तथा वर्णेश भी दुर्बल हो तो उपनयन संस्कार नहीं करना चाहिए।।५।।

**क्रमागतः—**

**नारदः—**

दृश्यमाने गुरौशुक्रे दिनेशे चोत्तरायणे।
वेदानामधिपा जीवशुक्रभौमबुधः क्रमात्।।

*—(ना. सं. अ. २४, श्लोक ४)*

### उपनयन में बृहस्पति विचार

**शाखेश्वरस्ववर्णेशगुरूणां बलपूर्वकम्।**
**ततोऽप्येषां गुरुबलं मुख्यमाचार्य शिष्ययोः।।6।।**

उपनयन में शाखा का स्वामी, वर्णों का स्वामी एवं बृहस्पति का बल विचार आवश्यक है। इनमें भी सर्वाधिक गुरु के प्रधानाचार्य एवं शिष्य दोनों बल का विचार आचार्य एवं शिष्य दोनों के लिए महत्वपूर्ण है।

### उक्त एवं अनुक्त वर्षों में ग्रहों का बलाबल

**उक्तेऽपि वर्षे न गुरुर्बली चेच्छान्त्या प्रशस्तं व्रतबन्धकर्म।**
**अनुक्तवर्षेऽपि बलप्रदोऽपि न वै तयोरब्दबलो बलीयान्।।७।।**

उक्त वर्षों में अर्थात् कहे गये वर्षों में बृहस्पति बलशाली न हो तो शान्तिक उपायों से व्रतबन्ध (जनेऊ) श्रेष्ठ होता है। अनुक्त वर्षों में अर्थात् जो वर्ष निषिद्ध है, उन वर्षों में गुरु के बलप्रदा होने पर भी व्रतबन्ध नहीं करना चाहिये; क्योंकि वर्ष का बल अधिक बलवान माना गया है।

**क्रमागतः—**

**नारदः—**

बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः।
यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम्।।

*—(ना. सं., अ. २४, श्लोक ३)*

**कश्यपः—**

जन्मान्त्य निधनस्थोऽपि पूज्या शुभदो गुरुः।
उक्तेऽब्दे चेदनुक्ते तु न शस्तो बलवानपि।।

*—(क.सं., अ. २८. श्लोक ७)*

### शाखेश, गुरु एवं शुक्र का फल

**शाखेशगुरुशुक्राणामेकस्मिञ्छत्रुनिर्जिते।**
**विद्याव्रतार्थिभिस्तत्र न कार्यं चोपनायनम्।।8।।**

शाखा का अधिपति तथा गुरु एवं शुक्र इनमें से एक भी यदि शत्रु द्वारा पराजित हों तो विद्या एवं व्रतबन्ध की इच्छा रखने वालों को उपनयन संस्कार नहीं करवाना चाहिए।।८।।

**शाखेशे वा गुरौ शुक्रे स्वनीचगृहसंस्थिते।**
**तदोपनीतः स शिशुर्विद्यावृत्तिविवर्जितः।।9।।**

शाखा अधिपति, बृहस्पति एवं शुक्र यदि अपनी-अपनी नीच राशियों में हों तो उस समय उपनीत बालक विद्या एवं वृत्ति से विवर्जित होता है। अर्थात् व्रतबन्ध निष्फल होता है।।९।।

**नीचांशसंस्थिते शुक्रे शाखेशे वा बृहस्पतौ।**
**स्वकुलाचारविच्छ्रेष्ठो नीच कर्म रतो व्रती।।१०।।**

शुक्र, शाखेश अथवा बृहस्पति यदि नीच राशि के नवांश में स्थित हो तो अपने कुलाचार में श्रेष्ठ व्रती भी नीचकर्म में रत रहता है।।१०।।

**नीचर्क्षनीचांशकसंस्थितेऽपि शाखेश्वरे वास्फुजितीन्द्रपूज्ये।**
**व्रती शिशुर्हीनकुलप्रसक्तः शस्त्रोपजीवी स्वकुलं विसृज्य।।११।।**

नीच राशि, नीचांश में स्थित शाखेश, बृहस्पति एवं शुक्र में व्रती हीनकुल वाला, शस्त्रों से जीविका चलाने वाला, अपने कुल का त्याग करने वाला होता है।।११।।

**क्रमागतः-**

**नारदः-**

स्वनीचगे तदंशे वा स्वारिभे वा तदंशके।
गुरौ भृगौ च शाखेशे कुलशील विवर्जितः।।
स्वाधिशत्रुगृहस्थे वा तदंशस्थेऽथवाब्रती।
शाखेशे वा गुरौ शुक्रे महाघातककृद्भवेत्।।

*—(ना. सं., अध्याय-२४, श्लोक १५-१६)*

**स्वारिनीचगते जीवे शाखेशे वा भृगोः सुते।**
**उपनीतस्तदा बालः क्षिप्रादन्त्यज सेवकः।।१२।।**

अपने शत्रु की राशि तथा नीचराशि में बृहस्पति, शाखेश अथवा शुक्र हों तो उस समय उपनीत बालक शूद्र का सेवक होता है।।१२।।

**शाखेशगुरुशुक्राणामेकस्मिञ्छत्रुराशिगे।**
**परदारासु निरतश्चोपनीतस्तदा शिशुः।।१३।।**

शाखेश, बृहस्पति तथा शुक्र इनमें से एक भी शत्रु राशि में हो तो इस समय उपनीत बालक परस्त्री रत रहता है।।१३।।

**शाखेशगुरुशुक्राणां मध्ये शत्रुनवांशगे**
**एकस्मिन्नुपनीतो यस्तदा मूर्खः खलो भवेत्।।१४।।**

शाखा का स्वामी, बृहस्पति तथा शुक्र इनमें से कोई भी शत्रु नवांश में हो तो इस समय उपनीत बालक मूर्ख एवं दुष्ट होता है।।१४।।

**शत्रुराशौ तदंशस्थे चैकस्मिन्खचरे व्रती।**
**शाखेशगुरुशुक्राणां महापातककृद्भवेत्।।१५।।**

शत्रु राशि एवं शत्रु नवांश में शाखेश बृहस्पति तथा शुक्र हों तो ऐसे समय में उपनीत बालक महापातक करने वाला होता है।।१५।।

**स्वनीचस्वारिषड्वर्गसंस्थे जीवेऽथ वा सिते।**
**शाखेशे वा तदा बालो महापातककृद्व्रती।।१६।।**

अपनी नीच राशि एवं शत्रु षड्वर्ग में बृहस्पति, शुक्र एवं शाखेश हों तो व्रती बालक महापातक करने वाला होता है।।१६।।

**अधिशत्रुगृहस्थे वा तदंशस्थे गुरौ भृगौ।**
**शाखेशे वा व्रती बालस्तदा चांडालसेवकः।।१७।।**

अधिशत्रु गृह में अथवा अतिशत्रु के नवांश में बृहस्पति, शुक्र एवं शाखेश हों तो उपनीत बालक चण्डाल सेवक होता है।।१७।।

**शत्रुनीचाधिशेवृक्षे स्वांशे वा स्वोच्च भागगे।**
**शाखेशे वा गुरौ शुक्रे च नीचफलमश्नुते।।१८।।**

शत्रु, नीच, अतिशत्रु राशि नवांश तथा अपने स्वोच्च भाग में शाखेश अथवा बृहस्पति शुक्र न हों तो उपनीत बालक को नीच फल मिलता है।।१८।।

**स्वमित्रराशिसंस्थे वा स्वमित्रांशे च संस्थिते।**
**गुरौ भृगौ वा शाखेशे व्रती विद्यायुतस्तदा।।१९।।**

अपने मित्र की राशि एवं स्वमित्रांश में स्थित बृहस्पति शुक्र एवं शाखेश हों तो उपनीत बालक विद्या से युक्त अर्थात् सुशिक्षित होता है।।१९।।

**क्रमागतः–**

**नारदः–**

मित्रराशिगते जीवे तदंशे वा स्वराशिगे।
शुक्रे वाचार्यसंयुक्ते तदा तत्र व्रतीशिशुः।।
स्वमित्रगृहस्थे वा तस्योच्चस्थे तदंशके।।
गुरौ भृगौवा शाखेशे विद्याधन समन्वितः।।

*—(ना. सं., अ. २४, श्लोक १९-२०)*

**स्वमित्रगेहे मित्रांशे संस्थे भार्गवनन्दने।**
**गुरौ शाखाधिपे वापि विद्यायुक्तो भवेद्व्रती॥२०॥**

अपने मित्र गृह, मित्रांश में शुक्र बृहस्पति तथा शाखाधिप हो तो उपनीत बालक विद्वान होता है॥२०॥

**स्वाधिमित्रगृहस्थे वा स्वाधिमित्रांशगेऽपि वा।**
**गुरौ शाखाधिपे वापि वित्तविद्याधिको व्रती॥२१॥**

अधिमित्र के गृह में अथवा अधिमित्र के नवांश में बृहस्पति तथा शाखेश हों तो उपनीत बालक वित्तविद्या (अर्थशास्त्र) में निपुण होता है॥२१॥

**स्वाधिमित्रगृहे स्वाधिमित्रांशकगते व्रती।**
**गुरौ भृगौ वा शाखेशे तत्र विद्याविशारदः॥२२॥**

अपने मित्र गृह में, अधिमित्र के नवांश में बृहस्पति शुक्र एवं शाखेश हों तो ऐसे समय में उपनीत बालक विद्या में पराङ्गत होता है॥२२॥

**तुङ्गस्थे वा तदंशस्थे गुरौ शाखाधिपे सति।**
**उपनीतस्तदा बालो विद्यावान्धनवान्भवेत्॥२३॥**

बृहस्पति एवं शाखेश अपने उच्च में अथवा अपने नवांश में हों ऐसे समय में उपनीत बालक विद्वान एवं धनवान होता है॥२३॥

**स्वतुङ्गतुङ्गांशगते शाखेशे वा गुरौ सिते।**
**व्रती शिशुर्धनायुष्य व्रतविद्याविशारदः॥२४॥**

अपने उच्च, अपने उच्च नवांश में शाखेश, बृहस्पति एवं शुक्र हों तो व्रती बालक धनी, आयुष्यमान तथा व्रत विद्या में पराङ्गत होता है॥२४॥

**सूर्यांशकगते चन्द्रे महापातककृद्व्रती।**
**पण्योपजीवी स्वांशस्थे नीचो निःस्वः खलो भवेत्॥२५॥**

सूर्य के नवांश में चन्द्रमा हो तो व्रती बालक महापातकी होता है। अपने अंश में अथवा नीच राशि में स्थित हो तो बालक व्यापार से जीविका चलाने वाला दरिद्र तथा दुष्ट प्रवृत्ति वाला होता है॥२५॥

### नवांशगत चन्द्रमा का फल

**श्रवणादिति कर्कांश संस्थिते यदि शीतगौ।**
**विद्यावान्धनवाञ्छ्रीमान्व्रतवान्भोगवान्व्रती॥२६॥**

श्रवण, पुनर्वसु तथा कर्क राशि के अंश में यदि चन्द्रमा हो तो उपनीत बालक विद्वान, धनवान, श्रीमान, व्रतवान एवं भोगवान होता है॥२६॥

क्रमागतः-

नारदः-

श्रवणादिति नक्षत्रे कर्क्यंशस्थे निशाकरे।
सदाव्रती वेदशास्त्रधनधान्यसमद्धिमान्।।

—(ना. सं. अ० २४ श्लोक २३)

**कुजांशकगते चन्द्रे शस्त्रजीवो खलो व्रती।**
**बुधांशकगते चन्द्र वेदवादी भवेद् वटुः।।२७।।**

मङ्गल के नवांश में यदि चन्द्रमा हो तो उपनीत बालक शस्त्रों से जीविका चलाने वाला दुष्ट आचरणयुक्त होता है। यदि चन्द्रमा बुध के नवांश में हो तो व्रती वटुक वेदवादी होता है।।२७।।

**जीवांशकगते चन्द्रे साङ्गवेदविशारदः।**
**शुक्रांशगे धनी दाता विद्यावित्तविशारदः।।२८।।**

देवगुरु बृहस्पति के नवांश में चन्द्रमा हो तो व्रती वटुक वेदवेदाङ्गों का ज्ञाता होता है। शुक्र के नवांश में यदि चन्द्रमा हो तो वटुक धनवान, दानी तथा वित्तविद्या (अर्थशास्त्र) में निपुण होता है।।२८।।

**क्षिप्रोद्वाही यज्ञकृत्स्यात्सत्रदो भोगवान्भवेत्।**
**सौरांशकगते चन्द्रे सदा चाण्डालसेवकः।।२९।।**

शनि के नवांश में चन्द्रमा हो तो व्रती वटुक शीघ्र विवाह करने वाला, यज्ञ करने वाला, भोगवान् तथा चण्डाल का सेवक होता है।।२९।।

**पापांशकगते चन्द्रे स्वाधि नीचस्थितेऽपि च।**
**अनध्यायोपनीतश्च पुनः संस्कारमर्हति।।३०।।**

पापग्रहों के नवांश में चन्द्रमा हो अथवा अपनी अधिनीच स्थिति में हो तो अनध्यायी, उपनीत बालक पुनः जनेऊ संस्कार के योग्य होता है।।३०।।

**उपनयन में काल शुद्धि निर्णय**

**नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिने।**
**मेखलाबन्धनं शस्तं चौले वेदव्रतेष्वपि।।३१।।**

नैमित्तिक, अनाध्याय, कृष्णपक्ष प्रतिपदा दिन में मेखलाबन्धन, मुण्डन वेदव्रत में भी शुभ माना गया है।।३१।।

**प्रशस्ता प्रतिपत्कृष्णा न पूर्वपरसंयुता।**
**चातुर्मास्य द्वितीयायां तृतीया चाक्षये तिथी।।३२।।**

कृष्णपक्ष की प्रतिपदा पूर्वापर संयुत न हो तो प्रशस्त मानी जाती है। चातुर्मास की द्वितीया एवं तृतीया तथा अक्षय तिथि में उपनयन संस्कार शुभ होता है।।३२।।

**उपनीतो यतः श्रीमान्विद्यावान्धनवान्भवेत्।**
**व्रते हि पूर्वसन्ध्यायां वारिदो यदि गर्जति।**
**तद्दिनं स्यादनध्यायं व्रतबन्धे विवर्जयेत्।।३३।।**

विधिपूर्वक उपनयन संस्कार हो जाने से व्रती वटुक श्रीमान्, विद्यावान तथा धनवान होता है। व्रतबन्धन की पूर्व सन्ध्या में यदि मेघ गर्जना हो तो उस दिन अनध्याय होता है। अतः मेघ-गर्जन व्रतबन्ध में वर्जित है। इस प्रकार के उपनयन संस्कार का त्याग करना चाहिए।।३३।।

क्रमागतः–

नारदः–

स्फूर्जितं केन्द्रगेभानौ व्रतिनो वंश नाशनम्।
कूजितं केन्द्रगे भौमे शिष्याचार्य विनाशनम्।।

*—(ना. सं. अ० २४ श्लोक ३१)*

### अष्टविध गलग्रह

**कृष्णपक्षे चतुर्थी च सप्तम्यादि दिनत्रयम्।**
**त्रयोदशी चतुष्कं च अष्टावेते गलग्रहाः।।३४।।**

कृष्णपक्ष की चतुर्थी, सप्तमी, अष्टमी, नवमी, त्रयोदशी, चतुर्दशी, अमावस एवं प्रतिपदा ये आठ तिथियाँ गलग्रह कही गयी हैं।।३४।।

क्रमागतः–

नारदः–

त्रयोदश्यादि चत्वारि सप्तम्यादि दिनत्रयम्।
चतुर्थी चैकतः प्रोक्ता ह्यष्टावेते गलग्रहाः।।

*—(ना. सं., अ० २४, श्लोक ३५)*

### उपनयन में श्रेष्ठा तिथियां एवं वार

**विधातृ 2 गौरी 3 फणि 5 षण्मुखा 6 द्रि यमाः 10 सकामास्तिथयः प्रशस्ताः।**
**मध्येऽर्करुद्रेऽपि च ते प्रशस्ते सुहृत्स्वतुङ्गर्क्षगते शशांके।।35।।**

द्वितीया, तृतीया, पञ्चमी, षष्ठी, दशमी तथा त्रयोदशी इत्यादि तिथियां श्रेष्ठ होती हैं। यदि चन्द्रमा अपने मित्रगृह अथवा उच्च में हो तो मध्ये (अष्टमी), द्वादशी एवं एकादशी तिथियां भी श्रेष्ठ होती हैं।।३५।।

**त्यक्त्वा चतुर्थीमपि कृष्णपक्षे त्वाद्यं त्रिभागं शुभदं व्रते च।**
**शस्ता सितेज्येन्दुजवासरास्ते रवीन्दुवारौ खलु मध्यमौ तौ।।३६।।**

कृष्णपक्ष की चतुर्थी को छोड़कर पहले तीन भाग अर्थात् प्रतिपदा, द्वितीया तथा तृतीया तिथियां व्रतबन्ध जनेऊ में शुभफलप्रद होती हैं। शुक्र, बृहस्पति एवं बुधवार व्रतबन्ध (जनेऊ) में शुभ कहे हैं। रवि एवं सोमवार ये दोनों वार मध्यम कहे हैं।।३६।।

### उपनयन में प्रयुक्त नक्षत्र

**हस्तत्रये च श्रवणत्रये च धातृद्वये त्र्युत्तरमैत्रभेषु।**
**पौष्णद्वये चादितिभद्वये च शस्तं द्विजानां खलु मौञ्जिकर्म।।३७।।**

हस्त से तीन हस्त, चित्र, स्वाती, श्रवण से तीन श्रवण, धनिष्ठा, शतभिषा रोहिणी से दो, रोहिणी मृगशिरा, तीनों उत्तरा, उत्तराफाल्गुनी, उत्तराषाढ़ा, उत्तराभाद्रपदा, अनुराधा रेवती से दो—रेवती, अश्विनी, पुनर्वसु से दो—पुनर्वसु, पुष्य इन नक्षत्रों में ब्राह्मणों के लिए उपनयन (जनेऊ) संस्कार प्रशस्त होता है।।३७।।

क्रमागतः–

कश्यपः–

मैत्रे विष्णुत्रये हस्तत्रयर्क्षेषुत्तराजये।
धातृद्वयादितीज्जान्त्य दस्रर्क्षेषूत्तममव्रतम्।।

—(क. सं., अ० २८, श्लोक १२)

### दिन के तीन भागों में कृत्य

**दिवसस्य त्रिभागे तु पूर्वाह्णे कर्म दैविकम्।**
**द्वितीये मानुषं कर्म तृतीये पैतृकं च तत्।।३८।।**

दिन के तीन भाग (पूर्वाह्न, मध्याह्न, अपराह्न) में, पूर्वाह्न में देवकार्य, दूसरे (मध्याह्न) में मानुष कर्म तथा तीसरे भाग (अपराह्न) में पितरों का कर्म श्रेष्ठ होता है।।३८।।

क्रमागतः–

कश्यपः–

विज्ञेयौ वासरा तत्र मध्यमौ चन्द्रसूर्ययोः।
विभज्याह्नः प्रमाणं यत् तत्राद्यांशे च दैविकम्।।
द्वितीये मानुषं कार्यं तृतीयांशे तु पैतृकम्।
अनुक्त वर्षकालेषु चोपनीतो विनश्यति।।

—(क. सं., अ० २८, श्लोक)

### उपनयन में विशेष तिथियां

**या चैत्रवैशाखसिततृतीया माघस्य सप्तम्यपि फाल्गुनस्य।**
**कृष्णद्वितीयोपनये प्रशस्ताः प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः।।३९।।**

चैत्र एवं वैशाख शुक्ल तृतीया, माघशुक्ल सप्तमी तथा फाल्गुन कृष्ण द्वितीया उपनयन (जनेऊ) के लिए प्रशस्त हैं ऐसा भारद्वाज इत्यादि मुनियों ने कहा है।।३९।।

### उपनयन में ग्राह्य लग्न

**लग्नादिसौम्यग्रहराशयो ये ग्रहा न पापग्रहराशयो ये।**
**ग्राह्याश्चतेऽपि प्रबलैश्च सौम्यैरधिष्ठिताश्चापि निरीक्षिता वा।।40।।**

लग्न शुभग्रह एवं राशियों से संयुक्त, शुभ ग्रहों से अधिष्ठित अथवा शुभग्रहों से देखा जा रहा हों तो उस लग्न में उपनयन संस्कार (जनेऊ) ग्राह्य हैं, परन्तु पाप राशियां एवं पापग्रह ग्राह्य नहीं हैं।।४०।।

### उपनयन में त्याज्य लग्न

**दोषैस्तुदृष्टः सततं हि कालस्तेभ्योऽपि मार्ष्ठु गुरुरप्यशक्तः।**
**दोषैर्न चाद्याः सगुणैर्गुणाद्यास्तस्मात्सकालः शुभदः शुभेषु।।41।।**

दूषित ग्रहों द्वारा निरन्तर देखा जाने वाला लग्नकाल बृहस्पति के बलशाली होने के कारण शुद्ध नहीं होता, परन्तु गुणों से युक्त लग्न काल सर्वदा शुभ कार्यों में शुभ ही होता है।।४१।।

**एवं तत्समयं वीक्ष्य शोभनं च समाचरेत्।**
**मङ्गले दिवसे तस्मिंश्चन्द्रताराबलान्विते।।४२।।**

इस प्रकार समय को देखकर शुभ दिन में जब चन्द्रताराबल अनुकूल हो तो शुभ कार्य करना चाहिए।।४२।।

### उपनयन में नवांश वशात शुभाशुभ फल

**कुलीरकांशं परिहृत्य सौम्यनवांशका मौंजिविद्यौ प्रशस्ताः।**
**ते निन्दताः क्रूरनभश्चराद्याश्चेदष्टमांशा अपि मानवस्य।।४३।।**

कर्क राशि के नवांश को त्यागकर सौम्य अर्थात् शुभग्रहों के नवांश में यज्ञोपवीत संस्कार श्रेष्ठ होता है। क्रूर ग्रहों के नवांश में अथवा अष्टमांश युक्त लग्न हो तो मानवों के लिए निन्दित होता है।।४३।।

**न नैधनं नैधनशुद्धलग्नं न नैधनर्क्षं न च तन्नवांशम्।**
**न नैधनेशं न तदंशकेशं लग्ने प्रशस्तं न च रात्रिनाथः।।४४।।**

निधन तारा न हो, लग्न से अष्टम स्थान शुद्ध हो, अष्टम राशि, अष्टम राशि का नवांश न हो, अष्टमेश न हो, अष्टमेश का नवांश भी नहीं हो, चन्द्रमा लग्न में न हो तो उपनयन-लग्न श्रेष्ठ होता है।।४४।।

क्रमागतः–

नारदः–

शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते।
लग्नेत्वनैधने सौम्यैः संयुक्ते वा निरीक्षिते।।
दृष्टेर्जीवाके चन्द्राद्यैः पञ्चभिर्वलिभिर्ग्रहै।
स्थानादिबलसम्पूर्नैश्चतुर्भिर्वा समन्विते।।

*—(ना. सं., अ० २४, श्लोक २४-२५)*

उपनयन में चन्द्रमा का शुभाशुभफल

**प्रालेयरश्मौ यदि लग्नसंस्थे बलक्षपक्षेऽपि भवेत्सरोगी।**
**व्रती च सौम्य ग्रहवर्गगेऽपि खलोऽति निःस्वःश्रुतिकर्महीनः।।४५।।**

चन्द्रमा लग्न में स्थित हो तथा कृष्णपक्ष भी हो तो व्रती वटुक रोगी रहता है, शुभग्रहों के वर्ग में चन्द्रमा हो तो व्रती बालक दुष्ट प्रवृत्ति वाला एवं वैदिक कर्मों से हीन होता है।।४५।।

उपनयन में लग्न शुद्धि

**इष्टाः पञ्च ग्रहा यस्य राशेस्तद्गृहसंज्ञके।**
**रविचन्द्रेज्य मुख्यास्ते चत्वारो वा बलान्विताः।।४६।।**

जिस लग्न में पाँच ग्रह इष्ट हों, राशियां भी उन ग्रहों की हों सूर्य, चन्द्रमा तथा बृहस्पति ये चारों बलवान हों तो उपनयन, यज्ञोपवीत के लिए लग्न शुद्ध होता हैं।।४६।।

ग्रहों का लग्न में शुभाशुभफल

**नीच स्थिताः शत्रुगृहस्थिताश्च पराजिताश्चास्तमिता ग्रहेन्द्राः।**
**लग्ने ग्रहास्ते स्वफलं प्रदातुं क्षमा न किञ्चिद् रिपुदृष्टदेहाः।।४७।।**

नीच राशि में, शत्रु राशि में, पराजित अस्तङ्गत शुभ ग्रह लग्न में होने पर भी शुभफलप्रद नहीं होते अथवा लग्न पर शत्रु ग्रहों की दृष्टि होने पर भी अपना फल देने में असमर्थ समझना।।४७।।

साम्य एवं क्रूर संज्ञक ग्रह

**सूर्यभौमशनिराहुकेतवः क्रूर संज्ञखचराः क्षयेन्दुना।**
**पूर्णचन्द्रगुरुशुक्रसोमजाः सर्वकर्मसु हि सौम्यखेचराः।।४८।।**

सूर्य, मङ्गल, शनि, राहु तथा केतु, क्षीण चन्द्रमा ये सभी क्रूर संज्ञक ग्रह कहे गये हैं। पूर्णचन्द्रमा, बृहस्पति, शुक्र एवं बुध सभी शुभ कार्यों में सौम्य संज्ञक हैं।।४८।।

### सूर्यादि ग्रहों का शुभाशुभफल

**रवौ लग्नादिकेन्द्रस्थे दोषाः स्फूर्जितसंज्ञकाः।**
**तत्रोपनीतस्य शिशोः कलनाशो भवेत्तदा॥४९॥**

सूर्यादि पापग्रह लग्न से केन्द्र में स्थित हों तो यह स्फूर्जितसंज्ञक (इन्द्र के वज्र के समान) दोष में उपनीत बालक का स्वर नाश होता है॥४९॥

**क्रमागतः-**

**कश्यपः-**

वर्धमानोऽपि वा चन्द्रः पूर्णो वा यदि तुङ्गगः।
निःस्वं करोति व्रतिनं लग्नगः क्षयरोगिणम्॥
व्रतबन्धन लग्नात्तु केन्द्रगो यदि भास्करः।
कुजितोऽयं महादोषः करोति कुलनाशनम्॥
कुजश्चेत् कुपितो दोषः शिष्याचार्य विनाशनम्।
मन्दश्चेद्बधिरो दोषः करोति महदागदम्॥
राहौरन्ध्राह्वयो दोषः शिशोर्मातृ विनाशनम्।
केतौ केन्द्रेतूग्रदोषो विद्यावित्तविनाशनम्॥
द्वादशस्थं रविभौमः पश्येदाचार्यमनधकृत्।
सम्यग्बलाबलं चिन्त्यं वदेद् दोष निरूपणम्॥

*—(क. सं., अ० २८, श्लोक ३४-३८)*

**कुजे लग्नादि केन्द्रस्थे दोषा स्फूर्जितसंज्ञकाः।**
**तत्रोपनीतं कौमारं हन्ति वर्षान्न संशयः॥५०॥**

मङ्गल लग्नादि से केन्द्र में हो तो स्फूर्जित संज्ञक दोष में उपनीत बालक का वर्ष में मरण होता है इसमें संशय नहीं॥५०॥

**शनौ लग्नादि केन्द्रस्थे दोषो रुधिरसंज्ञकः।**
**करोति महतीं पीडां व्रतिनो वा गुरोश्च वा॥५१॥**

शनि लग्नादि से केन्द्र में हो तो रुधिर संज्ञक दोष में उपनीत बालक के लिए बहुत पीड़ाप्रद अथवा गुरु के लिए भी कष्टप्रद होता है॥५१॥

**राहौ लग्नादि केन्द्रस्थे दोषो रन्ध्राह्वयो भवेत्।**
**व्रतिनो जननीं हन्ति चार्थं वा न च संशयः॥५२॥**

राहु लग्नादि से केन्द्रस्थ हो तो रन्ध्र नामक दोष में उपनीत बालक की माता के लिए मृत्युप्रद अथवा धनहानि होती है इसमें संशय नहीं॥५२॥

**केतौ लग्नादि केन्द्रस्थे दोषश्च उग्रसंज्ञकः।**
**समग्रं व्रतिनो वित्तव्रतविद्या विनाशनम्॥५३॥**

केतु लग्नादि से केन्द्र में हो तो उग्रसंज्ञक दोष में व्रती वटुक का धन, व्रत, विद्या सब कुछ नाश हो जाता है॥५३॥

**लग्नषष्ठाष्टमान्त्यस्थः करोति च निशाकरः।**
**व्रतिनो रोगमधनं निर्धनं दुःख सञ्चयम्॥५४॥**

लग्न, षष्ठ, अष्टम तथा द्वादश में स्थित चन्द्रमा व्रती वटुक को रोगी, धनरहित, निर्धनी तथा दुःखों का सञ्चय करवाता है॥५४॥

### व्रतविद्यापराङ्गत योग

**बुधो लग्नगतो जीवः शुक्रो वाप्यथ शाखपः।**
**करोति व्रतिनं नूनं व्रत विद्या विशारदम्॥५५॥**

बुध लग्न में, बृहस्पति या शुक्र अथवा शाखेश लग्न में हो तो व्रती बालक को निश्चित तौर पर व्रत, विद्या में पराङ्गत करता है॥५५॥

### द्वितीय स्थान में शुभाशुभ ग्रहों का फल

**द्वितीयस्था ग्रहाः सौम्याः सौख्यारोग्यबलप्रदाः।**
**तत्र पापग्रहाः सर्वे नूनं तत्फल नाशदाः॥५६॥**

द्वितीय स्थान में शुभ ग्रह हों तो व्रती बालक के लिए सुख, आरोग्य तथा बल देने वाले होते हैं, परन्तु द्वितीय स्थान में पापग्रह हों तो निश्चित तौर पर सम्पूर्ण शुभफल को नाश करते हैं॥५६॥

### तृतीय, चतुर्थ स्थान में रिक्त ग्रहों का फल

**तृतीयस्थाः शुभाः पापा व्रतविद्याधनप्रदाः।**
**चतुर्थस्थानगाः सौम्याः सम्पद् धनभागप्रदाः॥५७॥**

तृतीय स्थान में शुभाशुभ दोनों प्रकार के ग्रह हों तो उपनीत बालक के लिए व्रत, विद्या एवं धनप्रद होते हैं; किन्तु चतुर्थ स्थान में स्थित शुभ्रगह ही सम्पत्ति, भोग एवं धन प्रदान करते हैं॥५७॥

### पञ्चम स्थान में शुभाशुभग्रहों का फल

**पञ्चमस्थानगाः सौम्या नृपपूजार्थसिद्धिदाः।**
**तत्र पाप ग्रहाः सर्वे सदा सत्फल नाशदाः॥५८॥**

पञ्चम स्थान में शुभग्रह हों तो व्रती बालक राज पूजित और धन की सिद्धि वाला होता है; परन्तु पञ्चम स्थान में पापग्रह हों तो सर्वदा शुभफल का नाश होता है॥५८॥

### षष्ठ स्थान में स्थित शुभाशुभ ग्रहों का फल

**षष्ठस्थाः खचरा सौम्या दुःखशोक भयप्रदाः।**
**तत्रस्थाः क्रूरखचराः सदा तत्फलनाशदाः॥५९॥**

षष्ठ स्थान में शुभग्रह हों तो व्रती बालक के लिए दुःख, शोक एवं भयप्रद होते हैं; परन्तु षष्ठ स्थान में यदि पाप ग्रह हों तो दुःख, शोक एवं भयप्रद नहीं होते॥५९॥

### सप्तम-अष्टम स्थान में ग्रहों का फल

**लग्नात्सप्तमगाः सौम्या व्रतविद्यासुखप्रदाः।**
**सर्वे ग्रहाश्चाष्टमस्था निधनाधनशोकदाः॥६०॥**

लग्न से सप्तम स्थान में शुभ ग्रह हों तो व्रत, विद्या एवं सुखप्रद होते हैं। यदि अष्टम में सभी ग्रह स्थित हों तो मृत्यु, धनहीनता तथा शोकप्रद होते हैं॥६०॥

### नवम स्थान में शुभाशुभ ग्रहों का फल

**नवमे सौम्यखचरा वित्तायुष्य शुभप्रदाः।**
**तत्र पापाः सौम्यखेटकृततत्फलनाशकाः॥६१॥**

नवम स्थान में शुभग्रह हों तो धन, आयुष्य एवं शुभफलप्रद होते हैं; किन्तु नवम स्थान में पापग्रह हों तो शुभग्रहों द्वारा दिये गये शुभफल को नाश करते हैं॥६१॥

### दशम-एकादश स्थान में शुभाशुभ ग्रहों का फल

**सौम्याः कुर्वन्ति दशमे वृत्तिविद्याधनान्वितम्।**
**सर्वे ग्रहाश्च लाभस्थाः कुर्वंत्यभिमतं फलम्॥६२॥**

दशवें स्थान में स्थित शुभग्रह जीविका, विद्या एवं धनवान बनाते हैं, जबकि एकादश स्थान में शुभाशुभ ग्रह अभीष्ट (मनचाहा) फल देते हैं॥६२॥

### व्ययस्थान में शुभाशुभ ग्रहों का फल

**व्ययस्थानस्थिताः सर्वे कुर्वन्ति व्ययशीलिनम्।**
**खलं नीचं पापरतं बुद्धिहीनं विदेशगम्॥६३॥**

व्यय स्थान में स्थित शुभाशुभ ग्रह खर्चा करवाते हैं। दुष्टता, नीचता, पाप में आसक्ति बुद्धिहीनता तथा विदेश गमन करवाते हैं॥६३॥

### आचार्य का नेत्रहीन योग

**द्वादशस्थं रविभौमः पश्यन्नाचार्यनेत्रहा।**
**बलिनं बलवान्नूनमचिरात्तु न संशयः॥६४॥**

द्वादश स्थान में सूर्यमङ्गल यज्ञोपवीत संस्कार में नियुक्त आचार्य को नेत्र हीन करते हैं; क्योंकि बली ग्रह बलवान होने पर निश्चित रूप में प्रतिकूल फल देते हैं, इसमें संशय नहीं॥६४॥

### गुणदोष निरूपण

**दोषोऽप्येको गुणान्हन्ति तद्विरोधी गुणे न चेत्।**
**पञ्चगव्ययुतं पूर्णं कुम्भं मद्यलवो यथा॥६५॥**

एक दोष भी गुणों को नष्ट करता है, यदि उसका विरोधी कोई गुण न हो जैसे पञ्चगव्य (गाय का दूध, दही, घी, गोबर, मूत्र) से पूर्ण कलश में मदिरा (शराब) की एक बून्द पड़ जाए तो सम्पूर्ण पञ्चगव्य कलश को दूषित कर देती है॥६५॥

लग्नं सर्वगुणोपेतं दोषेणैकेनदूषितम्।
त्यजेत्तदंगुलमिव ह्युरगक्षतदूषितम्॥६६॥

लग्न सर्वगुण सम्पन्न हो, परन्तु एक ही दोष से दूषित हो जाए तो उसे वैसे ही त्याग देना चाहिए। जैसे सर्पदंश से दूषित (सर्प द्वारा काटी जाने वाली) अङ्गुली को काट दिया जाता है॥६६॥

### दूषित लग्न का फल

दोषोऽप्येको निहन्त्येव सकलं गुणसञ्चयम्।
लग्नोत्थं शुभखेटोत्थमनृतं सुकृतं यथा॥६७॥

लग्न में एक ही दोष समस्त शुभ ग्रहों द्वारा सञ्चित सद्गुणों को समाप्त करता है, जैसे एक झूठ सारे पुण्य को नष्ट कर देता है॥६७॥

पञ्चाङ्गलग्नलग्नांश शुभग्रहकृतान्गुणान्।
दोषोऽप्येको गुणान्हन्ति स्वैरिणी स्वजनानिव॥६८॥

पञ्चाङ्ग, लग्न, लग्न का नवांश और शुभग्रहों द्वारा कृत गुणों को एक ही दोष वैसे ही नष्ट कर देता है, जैसे स्वच्छन्दचारिणी स्त्री अपने जनों को नष्ट करती है॥६८॥

**क्रमागतः–**

**कश्यपः–**

एकस्मिन्केन्द्रगे जीवे शुक्रे वा यदि केन्द्रगे।
दोषा विनाशमायान्ति पापं भागीरथी जलैः॥
मित्रराशि गते जीवे शुक्रे वा केन्द्रगे बुधे।
दोषा नाशयन्ति पापाद्याः प्राणायामेन ते यथा॥
अधिमित्रनवांशस्थे शाखाधीशे त्रिकोणगे।
दोषा विनाशमायान्ति ग्रीष्मे कुसरितो यथा॥
यद्येकादशगः सूर्यश्चन्द्रो वा मित्रराशिगः।
हन्तिलग्नोद्भवं दोषं पूतनामिव केशवः॥
अधिमित्रर्क्षगः समर्थश्चन्द्रो वाप्यनुकूलगः।
दोषा विनाशमायान्ति स्वधाद्यं विष्णुचिन्तनात्॥
एकोदोषो गुणान् लक्षान् हन्ति तद्बाधको गुणः।
नास्ति चेत् पावनं पञ्च गव्यमद्य लवो यथा॥

—(क. सं., अ० २८, श्लोक ३९-४४)

निहन्ति सिद्धामृतयोगजातान्पञ्चाङ्गजातानपि लग्नजातान्।
शुभग्रहोत्थानखिलान्गुणौघानेकोऽपि दोषो हि यथा वृकोऽजान्॥६९॥

सिद्धियोग, अमृतयोग, पञ्चाङ्ग एवं लग्न द्वारा उत्पन्न योगों, शुभग्रहों द्वारा उत्पन्न समस्त गुणों को एक ही दोष ऐसे नष्ट करता है, जैसे बकरियों को भेड़िया नष्ट करता है॥६९॥

गुणाननेकाञ्छुभखेटजातान् पञ्चाङ्गलग्नामृतयोगजातान्।
एकोऽपि दोषः सुतरां निहन्ति सुपुण्यराशीनिवकूटसाक्षी॥७०॥

शुभ ग्रहों द्वारा उत्पन्न अनेक योगों को, पञ्चाङ्ग, लग्न, अमृतयोगों को एक ही दोष वैसे नष्ट करता है, जैसे सुन्दर श्रेष्ठ पुण्य समूह को कूटसाक्षी (झूठी गवाही देने वाला) नष्ट कर देता है॥७०॥

एकस्मिन् कूटगे दोषे नाशयत्यखिलान्गुणान्।
शरीरस्थे क्षये रोगे यथा द्राक्सप्त धातवः॥७१॥

एक ही बुरा दोष समस्त गुणों को नष्ट कर देता है, जैसे शरीर में विद्यमान क्षयरोग शारीरिक सात धातुओं को नष्ट कर देता है॥७१॥

**लग्न में बृहस्पति का फल**

सर्वानिमानतिबलाः स्फुरदंशुजालो लग्नोपगः प्रशमयेत्सुरराजमन्त्री।
एको वहूनि दुरितानि सुदुस्तराणि भक्त्या प्रयुक्त इव शूलधरे प्रणामः॥७२॥

समस्त मानति बल एवं किरण समूहों से युक्त लग्न में स्थित देवगुरु बृहस्पति समस्त दोषों को वैसे नष्ट करते हैं, जैसे अनेकों भयंकर पाप भगवान् शङ्कर को भक्तिपूर्वक प्रणाम करने से नष्ट हो जाते हैं॥७२॥

**लग्न में शुभग्रह का फल**

एकोऽपि केन्द्रगः सौम्यः सकलं दोषसञ्चयम्।
विनाशयति धर्मांशुरूदितस्तिमिरं यथा॥७३॥

एक ही शुभ ग्रह केन्द्र में हो तो समस्त सञ्चित दोषों को वैसे ही नष्ट करता है, जैसे भगवान् सूर्य के उदय होने पर अन्धकार नष्ट हो जाता है॥७३॥

**उच्चस्थ शुभग्रह का फल**

शुभग्रहः स्वोच्चसंस्थो लग्नं पश्यति चेद्यदा।
तदा दोषलयं प्राप्ता ग्रीष्मे कुसरितो यथा॥७४॥

शुभ ग्रह अपने उच्च स्थान में हो तथा लग्न का देखता हो तो सम्पूर्ण दोष वैसे नष्ट हो जाते हैं, जैसे गर्मी के दिनों में छोटी नदियां॥७४॥

मित्र राशि में शुभग्रह का फल

निरीक्ष्यमाणे लग्ने तु मित्रसंस्थे शुभग्रहे।
दोषालयं ययुः सर्वे लग्नलग्नांश सम्भवा॥७५॥

मित्र राशि में स्थित शुभ ग्रह लग्न को देखते हों तो लग्न एवं लग्नांश में सम्भव समस्त दोष नष्ट हो जाते हैं॥७५॥

उच्च, उच्चांश में शुभग्रह का लग्न में फल

स्वोच्चांशगे शुभे लग्ने दृष्टे युक्ते तदा तदा।
लग्नलग्नांशसम्भूताः सर्वदोषो लयं गताः॥७६॥

अपने उच्च, उच्चांश में शुभग्रह लग्न में स्थित हो, शुभग्रहों द्वारा युक्त या दृष्ट हो तो लग्न, लग्नांश से सम्भव समस्त दोष नष्ट हो जाते हैं॥७६॥

स्वाधिमित्रस्थ शुभग्रह का फल

एकोऽपि सौम्यखचरः स्वाधिमित्रगृहस्थितः।
आलोकयति चेल्लग्नं सर्वदोष विनाशकृत॥७७॥

एक ही शुभग्रह, अपने अधिमित्र गृह में स्थित होकर यदि लग्न को देखे तो समस्त दोषों का नाश करता है॥७७॥

मित्राधिमित्र-शुभग्रहों का फल

मित्राधिमित्रस्वक्षेत्र संस्थे सति शुभग्रहे।
वीक्ष्यमाणे यदा लग्ने तदा दोषा लयं ययुः॥७८॥

मित्र, अधिमित्र, स्वक्षेत्र में स्थित शुभ ग्रहों द्वारा लग्न पर दृष्टि हो तो समस्त दोषों का नाश हो जाता है॥७८॥

देवगुरु बृहस्पति का शुभफल

ये पापखेटप्रभवाश्च दोषा विलग्नलग्नांशक सम्भवा ये।
केन्द्रे गुरुस्तान्विमलान्करोति फलं यथांभः कतकद्रुमस्य॥७९॥

इति श्री ब्रह्मर्षि वृद्धवसिष्ठ विरचितायां संहितायामुपनयनाध्याय एकोनत्रिंशः॥२९॥

पाप ग्रहों द्वारा उत्पन्न दोष, लग्न या लग्नांश से उत्पन्न दोषों को बृहस्पति नष्ट करके निर्मल बना देता है, जैसे कतक वृक्ष का फल जल द्वारा धुल जाता है॥७९॥

वृद्धवसिष्ठ संहिता के ''उपनयनाध्याय'' की
'नारायणी' हिन्दी टीका सम्पूर्ण॥

पाठान्तरम्

०२. (अ) ज१, ज२-वाष्टमाब्दे (—वाष्टमेऽब्दे)
(ब) ज१, ज२-तद्वदेव (—वेदविद्भिः)
०५. (अ) ज१-मौढैयेल्पे च खार्द्धके, ज२-मौज्येल्प च वार्द्धिके (—प्रौढये वाल्ये च वार्द्धके)
(ब) ज१, ज२-दुर्वलेसति (—दुर्बलेऽपिच)
०६. (अ) ज१-शाखेशचराधिवसेशिगुरुणां, ज२-शाखेश्वराधिवर्णेशगुरुणां (—शाखेश्वरस्वस्वर्णेशगुरुणां)
०७. (अ) ज१-न वलीगुरुस्तेछात्प्रशस्तं, ज२-न बलीगुरुस्वेच्छात्प्रशस्तं (—न गुरूर्बलीचेच्छन्त्या प्रशस्तं)
(ब) ज१, ज२-अनुक्तवर्षेसु (—अनुक्तवर्षेऽपि)
०८. (ब) ज१-विद्यावृत्ताथिचिस्तत्र, ज२-विद्यावृत्तर्थिविस्तत्र (—विद्याव्रतार्थिभिस्तत्र)
०९. (अ-ब) ज१-पाठोनास्ति, ज२-तदेवनीत: (—तदोपनीत:)
१०. (ब) ज१, ज२-स्वकुलाचारविभ्रष्टो (—स्वकुलाचारविच्छ्रेष्ठो)
११. (अ) ज१-वास्फुजिर्देदवेज्य: (—वास्फुजितीन्द्रपूज्ये)
(ब) ज१, ज२-स्वकुजं (—स्वकुलं)
१२. (अ) ज१, ज२-स्वारिर्नीचमगे (—स्वारिनीचगते)
(ब) ज१, ज२-वालोक्षिप्रदंत्यसेवक: (—बाल: क्षिप्रादन्त्यसेवक:)
१३. (अ) ज१, ज२-स्वारिराशिगं (—शत्रुराशिगे)
१४. (अ) शुक्रनवांशगे ज१, ज२- (—शत्रुनवांशके)
१५. (अ) ज१-तदोसंस्थे, ज२-तदासंस्थौ (—तदंशस्थे)
ज१ ज२-चैकस्मिन् खेचरी, (—चैकस्मिन्खचरे)
१८. (अ) ज१, ज२-स्वप्तीव्याधोचभागगं (—स्वांशे वा स्वोच्चभागगे)
(ब) ज१, ज२-स्वनीचफलमश्रुते (—न नीचफलमश्नुते)
१९. (अ) ज१, ज२-स्वमित्रांशकसंस्थिते (—स्वमित्रांशे च संस्थिते)
२०. (ब) ज१, ज२-विषविद्यायुतोव्रती (—विद्यायुक्तो भवेद्व्रती)
२१. (अ) ज१, ज२-स्वमित्रांशकेपि वा (—स्वाधिमित्रांशगेऽपि वा)
(ब) ज१, ज२-चित्रविद्याधिको (—वित्तविद्याधिको)
२३. (अ) ज१, ज२-सिते (—सति)
(ब) ज१, ज२-वाले (—वालो)
२४. (ब) ज१, ज२-वृत्तविद्या (—व्रतविद्या)
२५. (ब) ज१-पुण्योपसेवी, ज२-पुण्योपवि (—पण्योपजीवी)
२६. (ब) ज१, ज२-वृक्षवान् (—व्रतवान्)
२७. (अ) ज१, ज२-कुंमांशकगते (—कुजांशकगते)

(ब) ज१-विदवेदी, ज२-वेदवेदी (—वेदवादी)
२८. (अ) मु. पु. यज्वा (—चन्द्रे)
३१. (अ) ज१-माध्यायं (—अनाध्यायं)
ज१, ज२-प्रतिपाद्दिनं (—प्रतिपद्दिने)
३२. (अ) ज१, ज२-प्रतिपत्कृष्णे) (—प्रतिपत्कृष्णा)
(ब) ज१-वाक्षयेतथा, ज२-चक्षयेतथा (—चाक्षये तिथी)
३३. (अ) ज१, ज२-व्रतं तत्र विवर्जयेत् (—व्रतबन्धे विवर्जयेत्)
३४. (ब) ज१-अष्टविते, ज२-अष्टाविते (—अष्टावेते)
३५. (ब) ज१, ज२-मध्येकरुद्रापि (—मध्येऽर्करुद्रेऽपि)
३६. (ब) ज१, ज२-शस्त: ज. मो. शस्ता: (—शस्ता)
३७. (ब) ज१-मौरिकर्म (—मौञ्जिकर्म)
३८. (अ) ज१, ज२-यस्तस्मिन्नधेषु (—तु पूर्वाह्ले कर्म)
३९. (ब) ज१, ज२-कृष्णतृतीयापमया (—कृष्णाद्वितीयोपनयने)
४०. (अ) ज१, ज२-लग्नायसौम्य (—लग्नादिसौम्य)
(ब) ज१-निरीक्षितो (—निरीक्षिता)
४१. (अ) ज१, ज२-दोषेस्तुद्रष्ट: मु. प. शेषैः सुदुष्ट: (—दोषैस्तु दृष्ट:)
४३. (अ) ज१, ज२-परिकृत्य (—परिहृत्य)
(ब) ज१-ते विंदिता: (—ते निन्दिता:)
ज१, ज२-क्रूरनभश्चरास्थाजेदष्टमांसा (—क्रूरनभश्चराद्याश्चेदष्टमांशा)
४६. (अ) ज१, ज२-राश्येल्लग्नसंज्ञकं (—राशेस्तद्गृहसंज्ञके)
(ब) ज१, ज२-रविचन्द्रार्क (—रविचन्द्रेज्य)
४७. (अ) ज१, ज२-पराजिताश्चास्तमपागताश्च (—पराजिताश्चास्तमिता)
४८. (अ) ज१, ज२-क्षयचन्द्र: (क्षयेन्दुना)
४९. (अ) ज१, ज२-स्फुरितसंज्ञका (स्फूर्जितसंज्ञका:)
५०. (अ) ज१, ज२-कुजितसंज्ञक: (—स्फूर्जितसंज्ञका:)
(ब) ज१, ज२-सिसोहतिवर्षन्नसंशय: (कौमारं हन्ति वर्षान्नसंशय:)
५१. (अ) ज१-दोषोवुजित, ज२-दोषोकुंभित (—दोषोरूधिरसंज्ञक:)
(ब) ज१, ज२-गुरोस्तथा (—गुरोश्च वा)
५२. (ब) ज१-स्त्वथवानसंघयं, ज२-स्त्वथवाधनुसंचयं (—चार्थं वा न च संशय:)
५३. (ब) ज१, ज२-चित्तवृत्तविद्या (वित्तव्रतविद्या)
५४. (अ) ज१, ज२-करोत्येवनिशाकर: (—करोति च निशाकर:)
(ब) ज१-रोगमतिसन्निर्धनं, ज२-रोगमनिसनिधनं (—रोगमधनं निर्धनं)
५५. (अ) ज१, ज२-विधौलग्नगतेजीवे (—बुधोलग्नगतो जीव:)
ज१, ज२-शुक्रोवाप्यथवास्थिते (—शुक्रोवाप्यथ शाखप:)
(ब) ज१, ज२-वृत्तविद्याधनान्वितं (—व्रतविद्याविशारदम्)

५६. (अ) ज१-ग्रस्था: (—ग्रहा:)
ज१, ज२-सौख्य-सौम्यफलप्रदा: (—सौख्यारोग्यबलप्रदा:)

५७. (अ) ज१, ज२-वित्तभोगकरा: सदा (—व्रतविद्याधनप्रदा:)
(ब) ज१, ज२-सम्पद्भोगसुखपदा: (—सम्पद्भोगधनप्रदा:)

५८. (ब) ज१-तत्फलहानिद: (—तत्फलनाशदा:)

६०. (अ) ज१, ज२-वृत्तविद्या (—व्रतविद्या)
(ब) ज१-निर्धनाधन, ज२-निधनाय (—निधनाधन शोकदा:)

६१. (अ) ज१, ज२-वृत्तपुण्यसुखप्रदा: (—वित्तायुण्यशुभप्रदा:)

६४. (अ) ज१, ज२-द्वादशस्था (—द्वादशस्थं)

६५. (ब) ज१, ज२-पंचगव्यमतं (—पञ्चगव्ययुतं)

६६. (अ) ज१, ज२-कुर्वगुणोपेतं (—सर्वगुणोपेतं)
(ब) ज१, ज२-दूषकं (—दूषितम)

६७. (अ) ज१, ज२-पुण्यसंचयम् (—गुणसञ्चयम्)
(ब) ज१-लग्नोल्वे, ज२-लग्नेष्वे (—लग्नोत्थं)
ज१-शुभषेपेच्छमनृतं, ज२-शुभषेपेहमवृतं (—शुभखेटोत्थमनृतं)

६८. (ब) ज१-गुणान्यान्ति, ज२-गुणान्यानि (—गुणान्हन्ति)

६९. (ब) ज१, ज२-वृकोजात् (—वृकोऽजान्)

७०. (ब) ज१-एकापिदोष:, ज२-टण्कोऽपिदोषो (—एकोऽपि दोष:)
ज१-सुतरात्रिहन्ति, ज२-सुतरान्निहन्ति (—सुतरां निहन्ति)
ज१, ज२-स्वपुष्य (—सुपुण्य)

७१. (अ) ज१, ज२-लग्नगते (—कूटगे)

७२. (अ) मु. पु. सर्वानिमानतिबल: (—सर्वानिमानितबला:)

७३. (ब) ज२-विनासयति (—विनाशयति)

७४. (ब) ज१-यान्तिग्रीष्मेर्क: सरिदे, ज२-यान्तिग्रीष्मेक: सरदे
(—प्राप्ता ग्रीष्मे कुसरितो यथा)

७६. (अ) ज१, ज२-स्वोच्चांशके (—स्वोच्चांशगे)
(ब) ज१, ज२-ययु: (—गता:)

७९. (अ) ज१, ज२-प्रभवा: (—प्रभवाश्च)
(ब) ज१, ज२-गुरूस्तान्विमलि (—गुरूस्तान्विमलान्)
(ब) ज१, ज२-कुटुकद्रुमस्य (—कतकद्रुमस्य)
पुष्पिका ज१-इति श्रीवृद्धवसिष्ठ विरचितायां महासंहितायामुपनयन विधिस्वरूपलक्षणं नाम एकोनत्रिंशतमोध्याय:॥२९॥
ज२-इति श्री वृद्धवसिष्ठ ब्रह्मऋषि विरचितायां महासंहितायामुपनयन विधिस्वरूपलक्षणं नाम एकोनत्रिंशतमोध्याय:॥२९॥

## ३०

# अथ समावर्त्तनाध्यायः

समार्वन की आवश्यकता

**अधीत्य वेदांश्च तदर्थशास्त्राण्यभ्यस्य लब्ध्वा स्वगुरोरनुज्ञाम्।**
**कुर्यात्समावर्त्तनकर्म पश्चाद्गोदानतः पाणि निपीडनात्प्राक्॥१॥**

यज्ञोपवीत संस्कार के पश्चात् वेदों का अध्ययन करके, अनेक अर्थ बतलाने वाले शास्त्रों का अभ्यास करके और अपने गुरु की आज्ञा प्राप्त करके विवाह से पूर्व गोदानपूर्वक समावर्त्तन कर्म करना चाहिए॥१॥

**क्रमागतः–**

**कश्यपः–**

अथातः सम्प्रवक्ष्यामि समावर्तनमण्डनम्।
गुर्वनुज्ञात शिष्याणां द्विजानां नियतात्मनाम्॥
सौम्यायने देवपूज्य शुक्रयोर्दश्यमानयोः।
चैत्र मास विवर्ज्येषु मघादिषु पञ्चसु॥
अष्टमीमवमां रिक्तां सामाद्यामन्तिमां तिथिम्॥
हित्वान्यदिवसे जीव सौम्यभार्गव वासरे॥

—(क. सं., अ० २९, श्लोक १-३)

समावर्तन का शुभमुहूर्त

**सौम्यायने निर्मलयोः सुरेज्यदैत्यज्ययोर्व्योम्नि बलक्षपक्षे।**
**संत्यज्य रिक्तामवमाष्टमीं च वैनाशिकाख्याखिलऋक्षवृन्दम्॥२॥**

उत्तरायण में बृहस्पति एवं शुक्र के उदित रहते हुए शुक्लपक्ष में चतुर्थी, नवमी, चतुर्दशी, अमावस अष्टमी तिथियों तथा वैनाशिक संज्ञक सभी नक्षत्रों को त्याग कर समावर्त्तन करना चाहिए॥२॥

**क्रमागतः–**

**नारदः–**

अथोत्तरायणे शुक्रजीवयोदृश्य मानयोः।
द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम्॥
चित्रोत्तरादितीज्यान्त्य हरिमैत्रेंदुभात्रिषु।
भेष्वर्केन्द्वीज्य शुक्रज्ञ वार लग्नांशकेषु च॥
अथवा वस्त्र नक्षत्रवार लग्नांशकेष्वपि।
प्रतिवत्सर्वरिक्तामा अष्टमी च दिनत्रयम्॥

हित्वान्य दिवसे कार्यं समावर्तन मंडनम् *

—(ना. सं., अ० २७, श्लोक १-३)

**समावर्तन मुहूर्त्त में प्रयुक्त नक्षत्र**

**करादिपञ्चस्वदितिद्वयाश्विविष्णुत्रये त्र्युत्तरधातृभेषु।**
**सपौष्णचान्द्रेषु शुभग्रहर्क्षवारेषु यत्स्नातक कर्म शस्तम्॥३॥**

**इति ब्रह्मर्षिवृद्धवसिष्ठ विरचितायां संहितायां समावर्तनाध्यायस्त्रिंशः॥३०॥**

हस्त से पाँच नक्षत्र, हस्त, चित्रा, स्वाती, विशाखा और अनुराधा, पुनर्वसु से दो, पुनर्वसु पुष्य, अश्विनी, श्रवण से तीन, श्रवण, धनिष्ठा, शतभिषा, उत्तराफाल्गुनी, उत्तराषाढ़ा, उत्तराभाद्रपद, रोहिणी, रेवती एवं मृगशिरा नक्षत्रों में शुभग्रहों के वारों एवं राशियों में स्नातक कर्म (समावर्तन) प्रशस्त होते हैं॥३॥

वृद्धवसिष्ठ संहिताके ''समावर्त्तनाध्याय'' की नारायणी
हिन्दी टीका सम्पूर्ण॥३०॥

क्रमागतः–

कश्यपः–

उत्तरात्रयमैज्य हरीन्द्वदिति धातृषु।
पौष्णाहस्तेषु ऋक्षेषु समावर्तनमीरितम्॥
शास्त्रोक्त वारधिष्ण्येषु यद्वा लग्नांशगे शुभे।
सर्वेषु मङ्गलेष्वादावङ्कुरार्पणमिष्यते॥
पर्वतो नवमे सप्त दिवसे पञ्चमेऽपि वा।
पञ्चाङ्ग शुद्धि दिवसे जीव नक्षत्र संयुते॥

—(क. सं., अ० २९, श्लोक १-३)

**पाठान्तरम्**

०१. (अ) ज१, ज२-अधीतवेदाश्च (—अधीत्यवेदांश्च)
ज१-लपू, ज२-लघू (—लब्ध्वा)
(ब) ज१-पश्चाद् गोधानती, ज२-पश्चाद् गोदानकर्मतः (—पश्चाद् गोदानतः)
०३. (अ) ज१, ज२-त्रयुत्तरवानृतेषु (—त्र्युत्तराधातृभेषु)
पुष्पिकाः ज१-इति श्रीवृद्धवसिष्ठ ब्रह्मऋषि विरचितायां महासंहितायां समावर्त्तनस्वरूपलक्षणं नाम त्रिंशतमोध्यायः॥३०॥
ज२-इति श्री वृद्धवसिष्ठ विरचितायां समावर्तनस्वरूपलक्षणं नाम त्रिंशतमोध्यायः॥३०॥

***

* 'मुंडनम्' इति पीयूषधारायाम

# ३१

# अथ विवाहप्रश्नाध्याय

**शुभे दिने दैवविदं त्वभिज्ञं ताम्बूलपुष्पाक्षतपूर्णपाणिः।**
**कर्त्ता च गत्वा प्रणिपत्य पृच्छेन्निवेद्य तस्मै वरकन्योर्मे।।१।।**

ताम्बूल पुष्पाक्षत अपने हाथों में लेकर प्रश्नकर्त्ता ज्योतिषी के पास शुभदिन में स्वेच्छा से जाकर प्रणाम पूर्वक निवेदन करके अपने वर एवं कन्या के सन्दर्भ में प्रश्न पूछे।।१।।

क्रमागतः–

नारदः–

पुण्येऽह्नि लक्षणोपेतं सुखासीनं सुचेतसम्।
प्रणम्य देववत्पृच्छेदैवज्ञं भक्तिपूर्वकम्।।
ताम्बूलफलपुष्पाद्यैः पूर्णाञ्जलिरूपाग्रतः।
कर्त्तानिवेद्य दंपत्योर्जन्मराशिं स जन्मभम्।।
पृच्छकस्य भवेलग्नादिंदुः षष्ठाष्टगोऽपि वा।
दम्पत्योर्मरणं वाच्यमष्टमर्क्षान्तरे यदि।।

—(ना. सं., अ० २७, श्लोक ३-५)

चन्द्रमा का शुभाशुभफल

**प्रष्टुर्विलग्नात्प्रबलः शशाङ्कः शत्रुस्थितो मृत्युग्रहस्थितो वा।**
**यथाष्टमाब्दात्परतो विवाहं करोति मृत्युं वरकन्योश्च।।२।।**

प्रश्नकर्त्ता के लग्न से प्रबल चन्द्रमा षष्ठाष्टम स्थित हो तो ऐसे समय में किया गया विवाह आठ वर्षों के पश्चात् वर कन्या के लिए मृत्युप्रद होता है।।२।।

क्रमागतः–

नारदः–

यदि लग्नगतश्चन्द्रस्तस्मात्सप्तमगः कुजः।
विज्ञेयं भर्तृमरर्णत्वष्टमेऽब्दे न संशयः।।
लग्नात्पंचमगः पापः शत्रुदृष्टः स्वनीचगः।
मृतपुत्रा तु सा कन्या कुलटा न तु संशयः।।

—(ना. सं., अ० २७, श्लोक ६-७)

पापग्रहों का पापफल

**एकोऽपि लग्नोपगतश्च पापः पापस्ततोऽन्यः खलुः सप्तमस्थः।**
**आसप्तमाब्दान्निधनं वरस्य बलान्वितौ तौ कुरुतस्त्ववश्यम्।।२।।**

एक भी ग्रह लग्न में स्थित हो तथा अन्य पाप ग्रह सप्तम स्थान में विराजमान हों तो सात वर्षों के भीतर वर की मृत्यु हो जाती है। यदि पापग्रह बलशाली हो तो अवश्य ही उक्त फल घटित होता है।।२।।

**क्रमागतः–**

**कश्यपः–**

पञ्चाङ्गशुद्धि दिवसे सुखासीनं सुचेष्टितम्।
भक्त्या प्रणम्य दैवज्ञं पृच्छेदेवं यथाविधि।।
ताम्बूलफल पुष्पाद्यैः पूर्णाञ्जलिमुपागतः।
दम्पत्योर्जन्मभं राशिं तस्मै कर्त्ता निवेदयेत्।।
चन्द्रः षष्ठाष्टमगतो बलवान् पृच्छकोदयात्।
वेदाष्टमाब्दात्परतो दम्पत्योर्मरणं भवेत्।।
एको लग्नगतः पापः पापोऽन्यः सप्तराशिगः।
आसप्तमाब्दान्मरणं पुरुषस्य न संशयः।।
यदि चन्द्रो लग्नगतस्तस्मात्सप्तमगः कुजः।
विवाहतस्त्वष्टमाब्दात्कुरूते निधनं पतेः।।

—(क. सं., अ० ३०, श्लोक ४-८)

**आठवें वर्ष में वर या कन्या मृत्युयोग**

**प्रालेयरश्मौ यदि लग्नसंस्थे तस्मात्कुजः सप्तमराशि संस्थः।**
**तदाष्टमाब्दात्कुरुतस्त्ववश्यं वरस्य मृत्युंत्वथ वाङ्गनायाः।।३।।**

यदि चन्द्र लग्न में स्थित हो, लग्न से सप्तम मङ्गल हो तो आठवें वर्ष में वर या कन्या की मृत्यु अवश्य हो जाती है।।

**सप्तम स्थान स्थित पापग्रहों का फल**

**स्वनीचगः शत्रुनिरीक्षितश्च पापो विलग्नाद्यदि सप्तमस्थः।**
**विवाहिता सा मृतपुत्रिणी स्याद्वन्ध्याऽथवाभर्तृविवर्जिता वा।।४।।**

अपने नीच में, शत्रु ग्रह द्वारा देखा गया पाप ग्रह यदि लग्न से सप्तम स्थान में हो तो विवाहित स्त्री मृतक पुत्रों वाली, वन्ध्या अथवा पति द्वारा त्यक्ता होती है।।४।।

**क्रमागतः–**

**कश्यपः–**

स्वनीचगः शत्रुदृष्टः पापः पंचमगो यदा।
मृतपुत्रां करोत्येव कुलटां वा न संशयः।।
लग्नाद्दुश्चिक्य वृद्धास्त कर्मलाभगतः शशी।
गुरूदृष्टस्तयोरेव सम्बन्धं कुरू ते सदा।।

—(क. सं., अ. ३०, श्लोक ९-१०)

### चन्द्र, गुरु दृष्टि का फल

**लग्नात्त्रिपञ्चास्तदशायगेषु हिमद्युतिर्जीव निरीक्षितश्च।**
**तयोस्तु सम्बन्धकरस्तदानीं नार्कांशुलुप्तो न च नीचगश्चेत्।।५।।**

लग्न से तीसरे, पाँचवें, सातवें, दशमें तथा एकादश भाव में गए हुए चन्द्रमा पर गुरु दृष्टि हो परन्तु गुरु सूर्यांशों में लुप्त न हो तथा नीच न हो तो वर कन्या का सम्बन्ध करवाने वाला वहीं पर होता है।।५।।

### कन्यालाभ योग

**विलग्नगा गोघटकर्कटाश्च हिमांशुदैत्येज्य समन्वितास्ते।**
**संवीक्षिता वा यदि कन्यकाया लाभं भवेदत्र च पृच्छकस्य।।६।।**

वृष, कुंभ एवं कर्क राशियां लग्न में हों तथा चन्द्रमा, शुक्र भी वहाँ स्थित हों या देखते हों तो प्रश्न कर्त्ता को कन्या लाभ अवश्य होता है।।६।।

**क्रमागतः–**

**नारदः–**

शुक्रेन्दू युग्मराशिस्थौ युग्मांशकगतौ तदा।
बलिनौ वीक्षितौ लग्नं कन्या लाभो भवेत्तदा।।
स्त्रीनिवासो युग्म लग्नं यदि चेत्स्यात्समागमः।
वीक्षितश्चन्द्र शुक्राभ्यां कन्या लाभो भवेत्तदा।।
अयुग्म राशिगौ चेत्तौ शुक्रेन्दू बलिनौ तथा।
पश्यतो लग्नमेतौ चेद्वरलाभो भवेत्तदा।।

—(ना. सं., अ० २७, श्लोक १०-१२)

### अजीवनसुखप्रदयोग

**अनोऽन्यराश्यंगतौ सितेन्दू निरीक्षितौ तौ बलिनौ विलग्नम्**
**तस्योस्तदानीं कुरुतस्त्ववश्यं सम्बन्धमाजीवित शर्मदं स्यात्।।७।।**

चन्द्रमा एवं शुक्र परस्पर एक-दूसरे के राश्यांश में गये हों, बलवान होकर लग्न को देखते हों तो दोनों का अर्थात् वर-कन्या का सम्बन्ध अवश्य होता है और यह सम्बन्ध आजीवन सुखप्रद होता है।।७।।

### कन्या का वर प्राप्तियोग

**अयुग्मराश्यंशगते विलग्ने निरीक्षिते पुंखचरैर्दृकाणे।**
**तथाविधे तस्य वरस्य लाभं वदेत्तदानीं खलु कन्यकायाः।।८।।**

**इति श्री ब्रह्मर्षि वृद्धवसिष्ठ विरचितायां संहितायां**
**विवाह प्रश्नाध्याय एकत्रिंशः।।३१।।**

विषम राश्यांश लग्न को पुरुष ग्रहों द्वारा देखा जाता हो अथवा द्रेष्काण में पुरुष ग्रह स्थित हों तो उसी विधि से कन्या को वर का लाभ होता है, ऐसा कहना चाहिए।।८।।

वृद्धवसिष्ठसंहिता के ''विवाहप्रश्नाध्याय'' की ''नारायणी'' हिन्दी टीका सम्पूर्ण।।

**पाठान्तरम्**

०१. (ब) ज१-वरकन्योर्म, ज२-वरकन्यायोम, ज.मो. वरकन्योर्मय मु. पु. वरकन्योश्च (—वरकन्योर्मे)

०२. (अ) मु. पु. नास्ति—(अ) ज१, ज२-प्रवराशशांक: (—प्रबल: शशाङ्क:)
(ब) ज१, ज२-यचष्टमाब्दाभ्यान्तरतो (यथष्टमाब्दात्परतो)

०३. (ब) ज१-वरस्थ, ज. मो.-नरस्य (—वरस्य)

०४. (अ) ज१, ज२, ज.मो. पञ्चमस्थ: (—सप्तमस्थ:)
(ब) ज१-मृतपुत्रेणौ (—मृतपुत्रिणी)
ज१, ज२-मर्त (—भर्तृ)

०५. (ब) ज. मो. नीचगस्ते (—नीचगश्चेत्)

०७. (अ) ज१, ज.मो. (अतोजराश्यंशगतौ, ज२-अनोजराशांश्यगतौ (—अनोऽन्यराश्यंशगतौ)
ज. मो.-विलग्ने (—विलग्नम्)

०८. (अ) ज१-तयोरीक्ष्यते (—निरीक्षिते)
(ब) ज. मो.- तत्र (—तस्य)
पुष्पिका ज१-इति श्रीवृद्धवसिष्ठ ब्रह्मऋषि विरचितायां महासंहितायां विवाहप्रश्नस्वरूपलक्षणा नाम एकत्रिंशतमोध्याय:।।३१।।
ज२-इति श्री वृद्धवसिष्ठ विरचितायां विवाहप्रश्नस्वरूपलक्षणं नाम एकत्रिंशतमोध्याय:।।३१।।

***

## ३२

# अथविवाहाध्याय:

**कश्चिद् गृहाश्रमसमो न परोऽस्ति धर्मः।**
**सोऽपि स्थितः सुगुणवृत्तयुतांगनासु॥**
**उद्वाहलग्नवशतो गुणवृत्तलब्धि-**
**स्तासां तथाविधसुलग्नमतः प्रवच्मि॥१॥**

**नारायणी टीका**

गृहस्थ आश्रम के समान दूसरा कोई भी आश्रम धर्म नहीं है और उसमें यदि श्रेष्ठ गुणों से युक्त सुन्दर आचरण सम्पन्न गृहिणी हो तो विवाह लग्न के अनुसार गुणवृत्ति लब्धि प्राप्त होती है। अत: विवाह समय में स्त्री के सुन्दर आचरण के लिए सुन्दर विवाह लग्न को कहता हूँ॥१॥

**क्रमागतः-**

**नारदः-**

सर्वाश्रमाणामाश्रेयं गृहस्थाश्रममुत्तमम्।
यतस्तदपि योषायां शीलवत्यां स्थितस्ततः॥
तस्यास्तच्छीललब्धिस्तु सुलग्न वशतः खलु।
पितामहोक्तां संवीक्ष्य लग्नशुद्धिं प्रवच्म्यहम्॥

*—(ना. सं., अ. २७, श्लोक १-२)*

व्यास:

गृहाश्रमात्परो धर्मों नास्ति नास्ति पुनः पुनः।
यज्ञैर्हिर्दक्षिणावद्भिर्वह्निश्रूषया तथा॥
गृहीस्वर्गमवाप्नोति तथा चातिथिपूजनात्।

—(वृहद्दैवज्ञरञ्जनम् पृ. सं. २००)

**अब्देषु युग्मेष्वपि कन्यकानां स्वजन्मवर्षाच्छुभदो विवाहः।**
**अयुग्मवर्षेषु शुभो नराणां विपर्यये दुःखगदप्रदः सः॥२॥**

जन्म से सम वर्षों में कन्या का विवाह शुभफलप्रद होता है तथा विषम वर्षों में पुरुषों का विवाह शुभफलप्रद होता है। इसके विपरीत अर्थात् कन्याओं का विषम वर्षों में तथा पुरुषों का सम वर्षों में विवाह दुःख एवं रोग देने वाला होता है॥२॥

**क्रमागतः-**

**नारदः-**

युग्मेब्देजन्मतः स्त्रीणां प्रीतिदंपाणिपीडनम्।
एतत्पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः॥

—(ना. सं., अ. २९, श्लोक १)

पराशरः

युग्मेब्दे सम्पदः सौख्यविद्याधर्मायुषः सदा।
भर्तृदुष्टा भवत्योजे निषेकान्नात्र संशयः।।

—(पी.यू.धा. टी. ६ प्र० १२ श्लोक)

कश्यपः–

विवाहो जन्मतः स्त्रीणां युग्मेब्देपुत्रपौत्रदः।
अयुग्मे श्रीप्रदः पुंसां विपरीते तु मृत्युदः।।

—(पी.यू.धा. टी. ६ प्र० १२ श्लोक)

मन्वर्थमुक्तावल्याम्

अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत्।
तस्माद् गर्भान्विते युग्मे विवाहे सा पतिव्रता।।

—(पी.यू.धा. टी. ६ प्र० १२ श्लोक)

**दिनाधिपे मेषवृषालिकुम्भनृयुङ्मृगाख्येषु गृहेषुसंस्थे।**
**माघद्वये माधवशुक्रयोस्तु मुख्योऽथवा कार्त्तिकसौम्ययोश्च।।३।।**

सूर्य मेष, वृष, वृश्चिक, कुम्भ, मिथुन एवं मकर राशियों में हो तो विवाह होता है। माघ, फाल्गुन, वैशाख, ज्येष्ठ, मार्गशीर्ष कार्त्तिक तथा आषाढ़ मास—।।३।।

क्रमागतः–

नारदः–

माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः।
मध्यम कार्त्तिको मार्गशीर्षो वै निन्दिताः परे।।

—(ना. सं., अ. २१, श्लोक-२)

### विवाह में शुभाशुभ तिथियां

**शुक्ले द्वितीयादित एव कृष्णपक्षे दशम्यन्तगताः शुभाः स्युः।**
**तास्वष्टमीस्कन्दगणेशदुर्गा चतुर्दशी चापि तिथिर्विवर्ज्याः।।४।।**

विवाह में शुक्लपक्ष की द्वितीया से कृष्णपक्ष की दशमी पर्यन्त तिथियां शुभ होती हैं। उनमें अष्टमी, षष्ठी, चतुर्थी, नवमी, चतुर्दशी इत्यादि तिथियां वर्जित हैं।।४।।

### पक्ष अनुसार चन्द्रफल

**दिने दिने वृद्धिमुपागतत्वाद्बली हि चन्द्रः शुभं एव शुक्ले।**
**तथैव कृष्णे विलयं गतत्वात्पक्षापराद्धात्खलु पाप एव।।५।।**

शुक्लपक्ष में दिन-प्रतिदिन वृद्धि को प्राप्त होता हुआ चन्द्रमा शुभ होता है। इसी प्रकार कृष्णपक्ष में घटता हुआ चन्द्रमा अशुभ समझें तथा पक्षान्त तक निश्चित पापी हो जाता है।।५।।

**वाराः प्रशस्ताः शुभखेचराणां सूर्यार्किवारौ खलु मध्यमौ तौ।**
**त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषौ।।६।।**

शुभ ग्रहों के वार विवाह मुहूर्त्त के लिए शुभ होते हैं। रविवार एवं शनिवार ये दोनों वार मध्यम कहे गये हैं। मङ्गलवार सदैव त्याज्य करना चाहिए। त्रयोदशी एवं सप्तमी इन दोनों तिथियों का प्रदोषकाल त्याज्य है।।६।।

**तिस्त्रोत्तरामूलमघान्त्यमैत्रप्राजेशचन्द्रार्कसमीरभेषु ।**
**सदा प्रशस्तः खलु कन्यकायाः पाणिग्रहो वेधविवर्जितेषु।।७।।**

तीनों उत्तरा (उत्तरा फाल्गुनी, उ.षा., उ.भा.) मूल, मघा, रेवती, अनुराधा, रोहिणी, मृगशिरा, हस्त एवं स्वाति नक्षत्रों में कन्या का विवाह वेधविवर्जित होने के कारण शुभ होता है।।७।।

**रेखाश्चोर्द्धाः पञ्च तिर्यक् च पञ्च द्वे द्वे रेखे कोणयोरत्र चक्रे।**
**क्रमान्न्यसेच्छंभुकोणे द्वितीये रेखायां भान्यग्निभात्साभिजिच्च।।८।।**

पाँच रेखाएं ऊर्ध्व, पाँच रेखाएं तिरछी, दो, दो और कोण में बना कर द्वितीय रेखा पर क्रम से ईशान कोण में कृत्तिका नक्षत्र को स्थापित करके अभिजित् नक्षत्र सहित प्रदक्षिणा क्रम में सभी नक्षत्रों को लिखने से पञ्चशलाका चक्र बनता है।।८।।

**क्रमागतः-**

**विवाहवृन्दावने-**

याम्योत्तराप्रागपराश्च पञ्चद्वेद्वे च रेखे स्वयेद्विदिक्षु।
विदिग्द्वितीयार्गलिताग्नितारः सहाभिजित्तत्रभवेद् भवर्गः।।

—(वि. वृ., अ. ११, श्लोक-६)

**चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धयर्क्षं खेचरेण प्रदिष्टम्।**
**क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्यं सौम्यैर्विद्धं नाखिलं पादमेव।।९।।**

पञ्चशलाका चक्र में एक रेखा में स्थित ग्रह के द्वारा नक्षत्र विद्ध हो जाता है। यदि पाप ग्रहों द्वारा विद्ध हो तो सम्पूर्ण नक्षत्र का त्याग करना, यदि शुभग्रहों द्वारा विद्ध हो तो सम्पूर्ण नक्षत्र को न छोड़कर केवल मात्र नक्षत्र का अन्तिम चरण छोड़ना चाहिए।।९।।

**क्रमागतः-**

मूलादित्योः श्रवणमघयो सौम्य विश्वाद्वयोश्च।
पौष्णार्यम्णोर्वरूनमरुतोर्मैत्रयाम्यर्क्षयोश्च।।
अहिर्बुध्न्याभिधर विभयो रोहिणी साभिजिच्च।
वेधोयंवै मुनिभिरूदितः पाणिसम्बन्धकाले।।

—(वृ. दै. र., अ. ७१, श्लोक-७३६)

**आर्द्रोदयादूर्द्धमिनस्य कार्यं नक्षत्रवृन्दे दशके कदाचित्।**
**मासोक्तकर्मान्तरमङ्गलाद्यं न बोधनेऽह्नि प्रकटं मुरारेः॥१०॥**

सूर्य के आर्द्रा नक्षत्र में उदय के पश्चात् दश नक्षत्रों तक अर्थात् स्वातिनक्षत्र तक, जब सूर्य चल रहा हो तो विवाहादि मङ्गल कार्य नहीं करने चाहिए। पहले बताये गये मासों में विवाहादि मङ्गल कार्यों को भगवान् श्री विष्णु के जागृत होने के पूर्व (हरिप्रबोधिनी एकादशी पूर्व) नहीं करने चाहिए॥१०॥

क्रमागतः–

नारदः–

न कदाचिद्दशर्क्षेषु भानोरार्द्रा प्रवेशनात्।
विवाहं देवतानां च प्रतिष्ठां चोपनायनम्॥

*—(ना. सं., अ. २१, श्लोक-३)*

अप्रबुद्धो हृषीकेशोयावत्तावन्न मङ्गलम्।
उत्सवे वासुदेवस्य दिवसे नान्यमङ्गलम्॥

—(ना. सं., अ. २१, श्लोक-७)

**आर्द्रादिक स्वातिविरामकाले नक्षत्रवृन्दे दशके तथैव।**
**विवाहचौलव्रतबन्धनाद्यं सुरप्रतिष्ठा न च कार्यमेव॥११॥**

आर्द्रा नक्षत्र से स्वाति नक्षत्र तक सूर्यचार में उसी प्रकार विवाह, चौल, व्रतबन्ध तथा देवताओं की प्रतिष्ठा इत्यादि कार्यों को भी नहीं करना चाहिए॥११॥

**शुक्र का बाल्यत्व-वृद्धत्व दोष**

**प्रागुद्गतोऽहस्त्रितयं शिशुः स्याद्वृद्धो दशाहं दिशि तत्र शुक्रः।**
**पश्चाद्दशाहं शिशुरत्र वृद्धः पञ्चाहमार्योभयतस्तु पक्षम्॥१२॥**

पूर्व दिशा में शुक्रोदय होने पर तीन दिन तक बाल्यत्व दोष तथा दश दिन पर्यन्त वृद्धत्व दोष होता है। पश्चिम दिशा में उदय होने पर दश दिन तक बाल्यत्व दोष एवं पाँच दिन तक वृद्धत्व दोष रहता है; किन्तु आर्यों (श्रेष्ठ विद्वानों) ने पन्द्राह-पन्द्राह दिन तक बाल्यत्व एवं वृद्धत्व कहा है॥१२॥

क्रमागतः–

नारदः–

नास्तंगते सितेजीवे न तयोर्बालवृद्धयोः।
न गुरौ सिंहराशिस्थे सिंहांशक गतेऽपि वा॥
पश्चात् प्रागुदितः शुक्रः पञ्चसप्तदिनं शिशुः।
अस्तकाले तु वृद्धत्वं तद्वदेव गुरोरपि॥

—(ना. सं., अ. २१, श्लोक-४-५)

### चन्द्रमा का बाल्यत्व-वृद्धत्वं दोषफल

**वृद्धत्वमिन्दोस्त्रिदिनं दिनार्द्धं बालत्वमस्तत्वमहर्द्वयं च।**
**अस्ते विधौ मृत्युमुपैति कन्या वालेऽन्यसक्ता विधवा च वृद्धे॥13॥**

चन्द्रमा का तीन दिन तक वृद्धत्व, आधा दिन बाल्यत्व और दो दिन तक अस्तकाल होता है। चन्द्रमा के अस्तङ्गत होने पर विवाह हो तो कन्या मृत्यु को प्राप्त होती है। बाल्यत्व दोष होने पर परपुरुष आसक्ति और वृद्धत्व दोष में वैधव्यता होती है॥१३॥

### चन्द्रमा बाल्यत्ववृद्धत्वखण्डन

**येनोक्तमेकं दिवसं शिशुत्वमित्येतदिन्दोस्तदयुक्तमत्र।**
**महत्वशीघ्रत्वसुधामयत्वाद्दिनार्द्रमित्यब्जजनिष्ठितत्वात्॥१४॥**

जिन आचार्यों ने चन्द्रमा का बाल्यत्व एक दिन का कहा है। यह कथन युक्तिसंगत नहीं; क्योंकि चन्द्रमा की महत्ता, शीघ्रगति और अमृतमयी किरणें सूर्य में प्रतिष्ठित होने के कारण दिन के आधे भाग में ही ये सब प्राप्त हो सकते हैं॥१४॥

### विवाहमुहूर्त्तनिर्णयः

**स्वजन्ममासर्क्षतिथिक्षयेषु वैनाशिकाद्व्यृक्षगणेषु भेषु।**
**नोद्वाहमात्माभ्युदयाभिलाषी नैवाद्यगर्भं द्वितयं कदाचित्॥१५॥**

अपने जन्ममास, जन्मनक्षत्र एवं क्षय तिथियों में वैनाशिक आदि नक्षत्र द्वय में अपने अभ्युदय की अभिलाषा रखने वाला कभी विवाह न करे और न ही आद्यगर्भ अर्थात् प्रथमगर्भ से उत्पन्न पुत्र का ज्येष्ठमास में विवाह न करे॥१५॥

**क्रमागतः–**

**नारदः–**

न जन्ममासेजन्मर्क्षे न जन्मदिवसेपि च।
नाद्यगर्भसुतस्याथ दुहितुर्वा करग्रहम्॥
नैवोद्वाहो ज्येष्ठपुत्रीपुत्रयोश्च परस्परम्।
ज्येष्ठमासजयोरेक ज्येष्ठे मासे हिनान्यथा॥

—(ना. सं., अ. २१, श्लोक-७-८)

### नक्षत्र एकपाद में विवाह मुहूर्त्त निर्णय

**दम्पत्योर्जन्मभे चैक्ये राशौ च निधनं तयोः।**
**एकस्य च तथोद्वाहे किञ्चिद् भेदेऽपि वा न च॥१६॥**

दोनों पति-पत्नी का जन्म नक्षत्र एक हो, राशि भी एक हो, परस्पर विवाह में कुछ भी भेद न हो तो दोनों की मृत्यु होती है॥१६॥

क्रमागतः-

जगन्मोहने—

एकर्क्षे चैकराशौ च विवाहस्त्वशुभः स्मृतः।
संकोचे तु तदा कार्यो भिन्नपादे यदा तयोः।।

*—(मु.चि. ६ प्र० ३६ श्लोक पी. टी.)*

गर्गः

एक राशिं विना नाडीयोमादौ विवर्जयेत्।
न दोषस्त्वेक राशिस्थे भकूटेन्ये तु भृव्युदः।।

—(मु.चि. ६ प्र० ३६ श्लोक पी. टी.)

नारदः-

एकराशौपृथक् धिष्ण्ये दम्पत्योः पाणिपीडनम्।
उत्तमं मध्यमं भिन्नराश्यैकर्क्षगयोस्तयोः।।

—(मु.चि. ६ प्र० ३६ श्लोक पी. टी.)

### ज्येष्ठ, द्विज्येष्ठ, त्रिज्येष्ठ सूर्यचन्द्रग्रहण विचार

**ज्येष्ठे मासे ज्येष्ठयोर्वा नृनार्योनैवोद्वाहो नोपरागाद्भुतेषु।
सर्वग्रासे सप्तरात्रं तदर्द्धं खण्डे त्याज्यं चाद्भुते सप्तरात्रम्।।१७।।**

वर एवं कन्या यदि अपने-अपने माता-पिता की प्रथम सन्तान हों तो ज्येष्ठमास में विवाह नहीं करना चाहिए। त्रिज्येष्ठ विवाह के उपयुक्त नहीं। सर्वग्रास ग्रहण (सूर्य एवं चन्द्रग्रहण) होने पर सातरात्रि पर्यन्त, खण्डग्रास होने पर साढ़े तीन तथा अद्भुत उत्पाद (भूकम्प आदि) होने पर सातरात्रि तक विवाहादि मङ्गलकार्य नहीं करने चाहिए।।१७।।

क्रमागतः-

नारदः-

उत्पात ग्रहणादुर्ध्वं सप्ताहमखिलग्रहे।
नाखिले त्रिदिनं मात्र तदा नेष्टं ऋतुत्रयम्।।
ग्रस्तास्ते त्रिदिनं पूर्वं पश्चात् ग्रस्तोदये तथा।
सन्ध्याकाले त्रित्रिदिनं निःशेषे सप्त सप्त च।।

—(ना. सं., अ. २१, श्लोक-९-१०)

### सूर्यचन्द्रग्रहण का फल

**ग्रस्तोदये चोर्द्धमनिष्टमादौ ग्रस्तास्तमानेऽप्युडुमासषट्कम्।
नाड्यश्चतस्त्रस्तिथिऋक्षयोगे सन्धिर्द्विपादं करणस्य सन्धिः।।18।।**

सूर्य, चन्द्रमा के ग्रस्तोदये ग्रहण हो जाएं तो आधा अनिष्ट होता है। ग्रस्तास्त

ग्रहण हो जाए तो २७ दिन अथवा छः मास तक दोष होता है। तिथि, नक्षत्र और योग इत्यादि सन्धि होने पर चार घटी तक तथा करण की सन्धि होने पर दो चरण तक दोष होता है॥१८॥

### पापयोग विचार

**पक्षोऽब्दसन्धिस्त्रिदिनं च माससन्धिस्त्रिनाड्योभयसन्ध्ययोश्च।**
**सवैधृता विष्टिरथाष्टमेन्दुःसपापयोगः परिघार्द्धमाद्यम्॥१९॥**

पक्ष, मास एवं वर्ष की सन्धि में तीन दिन तक, दोनों सन्ध्याओं में तीन घटी तक, वैधृति योग, भद्रा तथा अष्टम चन्द्रमा तथा परिघ योग का आधा भाग पाप योग कहलाता है॥१९॥

**तिस्रोऽष्टकाश्चोक्तनिसर्गदोषाः सर्वत्र वर्ज्याः खलु मङ्गलेषु।**
**निमित्तसंयोगनिसर्गजानां मध्ये महादोषचयं ब्रवीमि॥२०॥**

पहले कहे गए सभी स्वभाविक दोषों में तीन या आठ घटी पर्यन्त सभी मङ्गल कार्यों में त्याग करना चाहिए। नैमित्तक संयोग तथा स्वभाविक होने वाले महादोष समूहों को अब मैं कहता हूँ॥२०॥

### महादोषसमूह कथन

**पञ्चाङ्गदोषो रविसंक्रमश्च ससंग्रहः कर्तरिकांशदोषौ।**
**चन्द्रोऽरिरिष्फाष्टमपापवर्गौ कुजोऽष्टमस्थो भृगुः षट्कसंस्थः॥21॥**

पञ्चाङ्ग दोष, सूर्य सङ्क्रमण, ससंग्रह, कर्त्तरीदोष, नवांशदोष, चन्द्रमा की षष्ठाष्टम द्वादश स्थिति, पापवर्ग की स्थिति, मङ्गल का अष्टमस्थ दोष तथा षष्ठस्थान में शुक्र होने का दोष—॥२१॥

**गण्डान्त खार्जूरिकवारदोषविषाख्यनाड्योऽष्टमलग्नराशी।**
**तस्मिन्महादोषचयेऽपि कार्यं कृतं च तन्नाशमुपैत्यवश्यम्॥२२॥**

गण्डान्त दोष, खार्जूरिक दोष, वारदोष, विषनाड़ी दोष, अष्टमराशि एवं अष्टमलग्न दोष इत्यादि महादोषों का समूह कहा—इन दोषों में जो भी विवाहादि मङ्गल कार्य किये जाते हैं, उन कार्यों का अवश्य नाश हो जाता है॥२२॥

**क्रमागतः–**

**नारदः–**

उदयास्त शुद्धिहीनो द्वितीयः सूर्यसंक्रमः।
तृतीयः पापषड्वर्गो भृगुः षष्ठे कुजोऽष्टमे॥
गण्डान्तः कर्तरीरिःफषडष्ठेन्दुश्च संग्रहः।
दम्पत्योरष्टमं लग्नं राशिर्विषघटी भवः॥

दुर्मुहूर्तो वारदोषः खाजुरीकः समांघ्रिजः।
ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम्।।
कुनवांशो महापातो वैधृतिश्चैकविंशतिः।
तिथिवारर्क्षयोगानां करणस्य च मेलनम्।।
पञ्चाङ्गमस्य संशुद्धिः पञ्चाङ्गं समुदाहृतम्।
यस्मिन्पञ्चाङ्ग दोषोस्ति तस्मिन्लग्नं निरर्थकम्।।

—(ना. सं., अ. २१, श्लोक-२२-२६)

**अकालवृष्टिः कुमुहूर्तदोषो महाव्यतीपातज वैधृतोत्थः।**
**लग्नास्तजाता ग्रहणर्क्षजाता पापर्क्षविद्धर्क्ष समुद्भवा ये।।२३।।**

अकाल वृष्टि, कुमुहूर्त्तदोष, महाव्यतिपाद एवं वैधृति से उत्पन्न दोष, लग्न के अस्त होने का दोष, सूर्यचन्द्र ग्रहण नक्षत्र दोष, पाप ग्रहों से विद्ध नक्षत्र दोष।।२३।।

**उत्पातभोल्कामहदाख्यदोषाः सर्वेषु देशेषु सदा विवर्ज्याः।**
**एकोत्तरा विंशतिरत्र दोषाः स्वसंहितायां च पितामहेन।।२४।।**

उत्पातदोष, नक्षत्रदोष, उल्कापातदोष, महद नामक दोष सभी देशों में विवर्जित हैं। इक्कीस प्रकार के दोषों को पितामह ब्रह्मा ने अपनी संहिता में लिखा है।।२४।।

**उपग्रहोलत्तभयातितर्क्षे उग्रहैर्विद्धविदूषितं यत्।**
**विरुद्धयोगेषु विरुद्धनाड्यो द्युराशयश्च ग्रहजन्मधिष्ण्यम्।।२५।।**

उपग्रह दोष, लत्ता दोष, भय, अतिनक्षत्र उपग्रह से विद्ध तथा विरुद्ध योगों में, विरुद्ध नाड़ी में द्विराशि तथा ग्रहजन्म नक्षत्र।।२५।।

**या मासदग्धास्तिथयो विलग्नान्यन्धानि शून्यानि च वाधिराणि।**
**द्युदग्धलग्नानि सपङ्गुकाण ज्वालामुखोद्बन्धन मासतिथ्यः।।26।।**

एवं मास दग्ध तिथि, लग्नान्ध, शून्य, वधिर, द्युदग्धलग्न, पङ्गु, काण, ज्वालामुख, बन्धन मासादि तिथियां।।२६।।

**प्रत्यर्कनीहारमहेन्द्रचापविद्युत्वता भूभ्रमणाभ्रदोषाः।**
**मरुत्प्रचारः परिवषेकम्पः प्रतीन्दुवैवर्णमथेन्दुभान्वोः।।२७।।**

प्रत्यर्क (प्रतिसूर्य) निहार, महेन्द्र, चाप, विद्युत वायु, भूमिभ्रमण, अभ्रदोष, मरुत्प्रचार, परिवेष, कम्प, प्रतीन्दु, वैवर्ण तथा सूर्यचन्द्र दोष।।२७।।

**द्युवारवारर्क्षजमृत्युघातहालाहलोत्था तु महानलाद्याः।**
**एतेऽल्पदोषाः क्रमशस्तथैषां देश व्यवस्था क्रियते सुसम्यक्।।28।।**

द्युवार एवं वार नक्षत्र से उत्पन्न दोष, मृत्यु, घात तथा हालाहल (शराब

मदिरा) से उत्पन्न दोष एवं महानल इत्यादि दोष क्रम से अल्प संज्ञक है। अत: इन दोषों को देश व्यवस्था के अनुसार कहते हैं॥२८॥

**उपग्रहर्क्षं कुरुबाह्लिकेषु कलिङ्गवङ्गेषु च पातितं भम्।**
**सौराष्ट्र शाल्वेषु च लत्तितं भं देशेषु वर्ज्यंशुभविद्धभं च॥२९॥**

उपग्रहनक्षत्रदोष कुरुदेश और बाह्लीक देश में, कलिङ्ग एवं बङ्ग देशों में पातित नक्षत्र दोष, सौराष्ट्र एवं शाल्व देशों में लत्तादोष तथा सभी देशों में अशुभग्रहों द्वारा विद्धनक्षत्र दोषों को समझना चाहिए॥२९॥

**निषिद्धयोगद्युनराशिजाता निषिद्धनाड्यो ग्रहजन्मभं च।**
**निशासु वार प्रभवादिदोषास्त्याज्याः सदा कौङ्कणसंज्ञदेशे॥30॥**

निषिद्धयोग एवं सप्तम राशि से उत्पन्न दोष, निषिद्ध नाड़ी ग्रह, जन्म नक्षत्र, रात्रि में वार प्रभवादि दोषों को कौंङ्कण नामक देश में सदैव त्यागना चाहिए॥३०॥

**ये मासदग्धादिदशैव दोषा विवर्जनीया खलु मध्यदेशे।**
**दुःस्वप्नदुर्दर्शनदुर्निमित्तं दुःशाकुनाद्यास्त्वपि यत्र तत्र॥३१॥**

जो मासदग्धादि दस दोष हैं, उनको मध्यदेश में त्याग देना चाहिए। दु:स्वप्न, दुष्ट दर्शन, दुर्निनिमित्तादि अपशकुन हैं, उनको जहाँ-तहाँ त्याग कर देना चाहिए॥३१॥

**प्रत्यर्कपूर्वा दशपूर्वदोषास्त्याज्याः सदा मागधगौडयोश्च।**
**नानाभिधानास्तिथिवारजाता नक्षत्रवारप्रभवाश्च दोषाः॥३२॥**

प्रतिसूर्य प्रत्यर्कपूर्वक दश पूर्व दोषों को सदैव मगध एवं गौड़दशों में, त्याग देना चाहिए। नाना प्रकार के तिथिवारों एवं नक्षत्रवारों से उत्पन्न दोषों को॥३२॥

**ते हूणवङ्गाङ्गखशेषु वर्ज्याः शेषेषु देशेषु न ते निषिद्धाः।**
**तस्मात्तु तेष्वेव विवर्जितास्ते देशेषु चान्येषु न दोषदाः स्युः॥33॥**

हूण, बङ्ग, अङ्ग, खश इत्यादि देशों में वर्जित करना चाहिए। शेष देशों में ये दोष निषिद्ध नहीं। अत: उन-उन देशों में उक्त दोषों को त्यागना चाहिए; किन्तु अन्य देशों में ये दोषप्रद नहीं होते॥३३॥

**कृत्वाधुनैषां विषयव्यवस्थां तान्पूर्वशास्त्रानुसरेण सम्यक्।**
**ततो महादोष निरूपणं च फलं तथा विस्तरतोऽभिधास्ये॥३४॥**

वर्त्तमान में इन दोषों के देश काल की व्यवस्था के अनुरूप करके पूर्व शास्त्र कथनानुसार अच्छी तरह व्यवस्थित करके एक बार फिर महादोषों का निरूपण तथा फलों को विस्तारपूर्वक कहूँगा॥३४॥

### पञ्चाङ्ग परिचय

**क्रमशस्तिथिवारर्क्षं योगतिथ्यर्द्धसंज्ञकम्।**
**तत्पञ्चाङ्गमिति प्रोक्तं पुण्यमर्केन्दुसम्भवाः॥३५॥**

क्रमशः तिथि, वार, नक्षत्र, योग एवं करण इत्यादि पाँच संज्ञाओं को पञ्चाङ्ग कहा गया है और यह पुण्यरूपी पञ्चाङ्ग सूर्य एवं चन्द्रमा से सम्भव होती है॥३५॥

**पञ्चाङ्गस्थ उत्पन्न दोषों का विचार**

**पञ्चाङ्गसंज्ञात्प्रभवः सदोषस्तस्मिन्कृतं मङ्गलसञ्चयं यत्।**
**दहत्यमोघं निखिलं च यद्वद्दावानलो विस्तृतकाननं यत्॥३६॥**

पञ्चाङ्ग (तिथिवारनक्षत्रयोगकरण) द्वारा उत्पन्न दोषों में किये गये मङ्गलकार्य अथवा कल्याणप्रद चीजों का सञ्चय पूर्णरूपेण उसी प्रकार भस्म से हो जाता है, जैसे विस्तृत जङ्गल को दावानल भस्म कर देती है॥३६॥

**संक्रमण कालनिर्णयः**

**विषुवतोऽयनतोऽपि दिनत्रयं हरिपदे षडशीतिमुखेषु च।**
**पूर्वतोऽपि परतोऽपि सङ्क्रमान्नाडिकाश्च खलु षोडश षोडश॥37॥**

विषुव दिन तथा अयन (उत्तरायण, दक्षिणायण) में भी तीन दिन विष्णुपदी (छयासी घटी) और सूर्य संक्रमण से सोलह-सोलह घटी तक संक्रमण काल रहता है॥३७॥

**सूर्य सङ्क्रान्ति का त्याग**

**सङ्क्रान्ति दोषे त्वचिरात्कृतं यदुद्वाह पूर्वाखिलमङ्गलौघम्।**
**लाक्षासमूहं ज्वलिताग्निमध्ये विलीयते यद्वदशेषकोटिः॥३८॥**

सङ्क्रान्ति दोष में अचिरात् किये गए विवाहादि समस्त मङ्गल कार्य वैसे ही नष्ट हो जाते हैं, जैसे लाक्षासमूह में जली हुई अग्नि में करोड़ों शेष विलीन हो जाते हैं॥३८॥

**क्रमागतः–**

**नारदः–**

त्याज्या सूर्यस्य संक्रान्तिः पूर्वतः परतः सदा।
विवाहादि कार्येषु नाड्यः षोडश षोडश॥

—(ना. सं., अ. २१, श्लोक-२९)

**संक्रमण में नाड़ी त्याग**

**यदा यत्र प्रवेशः स्यात्तदा तद्राशिसंक्रमः।**
**तस्मिन्नपि तदा त्याज्या नाड्यः षोडश षोडश॥३९॥**

जब यहाँ जिस राशि में सूर्य प्रवेश होता है, तब वही राशि संक्रमण काल कहलाता है। उस में भी सोलह-सोलह नाड़ियों का आगे तथा पीछे त्याग करना चाहिए॥३९॥

संग्रहदोष

आदित्यभूमिपुत्राद्यः सञ्युक्तश्चन्द्रमा यदा।
संग्रहाख्यो महादोषो हालाहल विषोपमः॥४०॥

सूर्य एवं मङ्गल का जब युतिसम्बन्ध हो जाता है तो संग्रह नामक दोष हालाहल विष के समान होता है॥४०॥

संग्रहदोषफल

यः पापखेटोद्भवसंग्रहाख्यो दोषः सलग्नोत्थगुणान्समस्तान्।
निहन्ति मत्तेभगणाननेकानेकोऽपि सिंहः प्रबलश्च यद्वत्॥४१॥

जो पाप ग्रहों द्वारा उत्पन्न संग्रहदोष लग्न से उत्पन्न सभी गुणों को वैसे ही नष्ट करता है, जैसे मत्त गजसमूह को एक प्रबल शेर नष्ट कर देता है॥४१॥

क्रमागतः–
नारदः–

शशाङ्के ग्रहसंयुक्ते दोषः संग्रहकारकः।
तस्मिन्संग्रहदोषे तु विवाहं नैव कारयेत्॥

—(मु. चि. ६ प्र० ४५श्लोक पी. टी.)

चन्द्रयुतिफल

दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजाः।
दौर्भाग्यं गुरुणा सितेन सहिते चन्द्रे समापत्न्यकम्।
प्रव्रज्यार्कसुतेन सेन्दुजगुरौ वाच्छन्ति केचिच्छुभम्।
व्याध्यैर्मृत्युरसद्ग्रहैः शशियुतैर्दीर्घः प्रवासः शुभैः॥४२॥

चन्द्रमा-सूर्य के साथ होने पर दरिद्रता, मङ्गल से मृत्यु, बुध से सन्तान रहित, बृहस्पति से भाग्यहीनता, शुक्र से पत्नी से वैमनस्य या शत्रुता, शनि से संन्यास होता है; किन्तु कुछ आचार्यों के मत से बुध एवं बृहस्पति से युक्त चन्द्रमा शुभ कहा गया है। पाप ग्रहों से सञ्युक्त चन्द्रमा रोगप्रद एवं मृत्युप्रद होता है। यदि शुभग्रहों से युक्त हो तो लम्बा प्रवास होता है॥४२॥

क्रमागतः–
नारदः–

तस्मिन्संग्रहदोषे तद्विवाहं नैवकारयेत्।
सूर्येणसंयुते चन्द्रे दारिद्र्यं भवतिध्रुवम्॥
कुजेनमरणं व्याधिर्बुधेन त्वनपत्यता।
दौर्भाग्यं गुरूणाचैव सापत्न्यं भार्गवे न तु॥
प्रव्रज्या रविपुत्रेण राहुणा कलहः सदा।
केतुना संयुतेचन्द्रे नित्यं कष्टं दरिद्रता॥

पापद्वय युतेचन्द्रे दम्पत्योर्मरणं भवेत्।
पापग्रहयुते चन्द्रे नीचस्थे राहुराशिगे।।
—(ना. सं., अ. २१, श्लोक-४७-५०)

***नोट : पीयूषधारा टीका में भी पाठ उपलब्ध है।***

भूपादभयं रिपुभयं व्यसनं प्रवासं,
वित्तक्षयं विदरणं च शुभक्रियासु।।
कर्त्तुः करोति शशभृत्क्रमशोर्क,
पूर्वैरिकग्रहैः सह विशन्नुडुमेकराशौ।।
—(वृ. दै. र. अ. ७१ श्लोक ७४१, ज्यो. नि. ७२, पृ. २२ श्लोक)

यस्मिन्नृक्षः स्थितः खेटस्तदृक्षं युतिसंज्ञकम्।
तस्मिन्विवाहिताकन्या पुंश्चली जायते ध्रुवम्।।
युति यामित्रगो नित्यं राहूकेतु फलप्रदौ।
व्यासशौनकयोर्वाक्यमस्मिन्नर्थे च लिख्यते।।
भास्कर युते चन्द्रे भवति धनैर्वर्जिता दुराचारा।
भौमेसाहसयुक्ता गात्रच्छेदं समाप्नोति।।
स्वसुतयुते रजनीकोसत्यवती धर्मशीला स्यात्।
सुरगुरूणा पतिदयितासधना नियता च पुत्रणी साध्वी।
शुक्रे विपन्नशीला नित्यं वशगा च सपत्न्याः।
सौरिण युता विधवां प्रवज्यां वा करोति विगतभया।।
राहुसमेते चन्द्रे प्राप्ते पाणिग्रहणं तुया।
परपुरुषसक्तहृदयानीचैरपि याति संसर्गम्।।
केतुयुते हिमरश्मौ कन्या पाणिग्रहणं तु या गच्छेत्।
धारयति सा सुतीव्रं नृकपालं सोमसिद्धान्तवित्।।
—(वृ. दै. र. अ. ७१ श्लोक ८४२, ४४-४८ *)

## युतिदोष का अपवाद

**नारदः–**

स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः।
युतिदोषाय न भवेद् दम्पत्योः श्रेयसे तदा।।

**कश्यपः–**

तुङ्गमित्रस्वराशिस्थशुभयुक्तः शुभप्रदः।
एवंविधः क्रूरयुतः सम्पूर्णफलदः शशी।।

वर्गोत्तमगतश्चन्द्रः स्वोच्चे वा मित्रराशिगः।
युतिदोषश्च न भवेद्दम्पत्योः श्रेयसी सदा।।
—(वृ. दै. र., अ. ७१, श्लोक-८५१-५३)

कर्त्तरीयोग लक्षण

**लग्नऽस्य पृष्ठाग्रगयोरसाध्वोः सा कर्त्तरी स्याद् ऋजुवक्रगत्योः।**
**तावेव शीघ्रौ यदि वक्रचारै न कर्त्तरी चेति पितामहोक्तिः।।४३।।**

विवाहलग्न से पीछे व आगे अर्थात् बारहवें व दूसरे पाप ग्रह होने से कर्त्तरी दोष होता है, चाहे वो मार्गी वक्री हों तथा वही दूसरे बारहवें शीघ्रगामी एवं वक्री हो तो कर्त्तरी दोष नहीं होता, ऐसा पितामह ब्रह्माजी ने कहा है।।४३।।

**क्रमागतः–**

**नारदः–**

लग्नस्य पृष्ठाग्र गयोरसाध्वोः।
साकर्तरी स्यादृजुवक्रगत्योः।।
तावेव शीघ्रं यदि वक्रचारौ,
नो कर्तरीति न्यगदन्मुनीन्द्रैः।।
लग्नाभिमुखयोः पापग्रहयोरुभयस्थयोः।
साकर्तरीति विज्ञेया दम्पत्योर्मृतिकर्तरी।।
—(ना. सं., अ. २१, श्लोक-४२-४३)

**ज्योतिःसागरे–**

पापमध्यगतेचन्द्रे पापसंसर्गगेपि वा।
शुभकर्म न कर्त्तव्यं तथा लग्ने कदाचन।।
व्यये मार्गगतिः क्रूरो वक्री क्रूरो धने यदि।
तौ च लग्नांशतुल्यौ चेत्तदा घोराख्य कर्त्तरी।।
महाविघ्नप्रदा ज्ञेया विवर्ज्या शुभकर्मसु।
क्रूरयोः कर्तरी नेष्टामहाविघ्नप्रदाध्रुवम्।।
—*(वृ. दै. र., अ. ७१, श्लोक १०३५-३७)*

**यः कर्त्तरी नाम महान्हि दोषो लग्नोद्भवानेकशुभग्रहोत्थान्।**
**गुणान्निहन्ति प्रबलानशेषान्व्याघ्रो यथा गोसमितिं समस्ताम्।।44।।**

जो कर्त्तरी नामक महान दोष है लग्न से उद्भव हुए अनेक तथा शुभग्रहों से उत्पन्न प्रबल गुणों को वैसे ही नष्ट कर देता है, जैसे व्याघ्र गायों के समूह को नष्ट कर देता है।।४४।।

क्रूरग्रहों के मध्य लग्न एवं चन्द्रस्थितिफल

**क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथवा करग्रहणम्।**
**ये यमसदनाभिमुखं गमनं चेच्छन्ति कन्यायाः।।४५।।**

क्रूर ग्रहों (पापग्रहों) के मध्य में लग्न अथवा चन्द्रमा की स्थिति हो तो ऐसे समय में यदि विवाह हो तो कन्या की इच्छा करने वाला वर यम मन्दिर की ओर गमन करता है अर्थात् वर की मृत्यु हो जाती है।।४५।।

**क्रमागतः–**

**नारदः–**

तल्लग्नं वर्जयेद्यत्नाञ्जीवशुक्रसमन्वितम्।
उच्चगे नीचगे वापि मित्रगे शत्रु राशिगे।।
अपि सर्वगुणोपेतं दम्पत्योर्निधनप्रदम्।
शशांके पापा संयुक्ते दोषः संग्रह संज्ञकः।।

—(ना. सं., अ. २१, श्लोक-४५-४६)

**पापयोः कर्त्तरीकर्त्रोर्नीचशत्रुगृहस्थयोः।**
**यदा चास्तगयोर्वापि कर्त्तरी नैवदोषदा।।४६।।**

कर्त्तरी कारक दो क्रूर ग्रह शत्रु घर में स्थित हों या अपनी नीच राशि में अथवा दोनों अस्तङ्गत हों तो ऐसी स्थिति में कर्त्तरी दोष नहीं होता।।४६।।

### लग्नादि राशियों पर शुभग्रहों का प्रभाव

**लग्नादि सर्वे खलु राशयश्च शुभेक्षिताश्चाथ युताः शुभाः स्युः।**
**नवांशकास्तौलिनृयुग्मवत्यश्चापार्द्धभागः शुभदो न चान्ये।।४७।।**

लग्नादि सभी राशियां, शुभग्रहों द्वारा देखी जाए तथा शुभग्रहों से युक्त हों तो शुभफलप्रद हो जाती हैं। तुला, मिथुन एवं धनुराशि का पूर्वार्द्ध भाग का नवांश विवाह में शुभफलप्रद होता है दूसरे कार्यों में नहीं।।४७।।

### राशिनवांशवश शुभाशुभफल

**द्विभर्तृका मेषनवांशके स्याद् वृषांशके सापि सुशीलयुक्ता।**
**धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाप्यजस्त्रम्।।४८।।**

मेष राशि के नवांश में विवाह हो तो कन्या दो पतियों वाली, वृष नवांश हो तो उत्तम चरित्रवाली, मिथुन नवांश में धनवती एवं पुत्रवती कर्क नवांश में निरन्तर कुलटा होती है।।४८।।

**क्रमागतः–**

**नारदः–**

तुलामिथुनकन्यांशधनुराद्यर्द्धसंयुता ।
एते नवांशाः शुभदाः यदि नान्त्यंशका खलु।।

—(वृ. दै. र., पृ. सं. ३३६)

शौनक–

सुन्दरी सौभाग्यवती प्रहसित वदना च मीनांशे।

—*(वृ. दै. र., पृ. सं. ३३६)*

कश्यपः–

अन्त्यांशका अपि श्रेष्ठा यदि वर्गोत्तभाह्वयाः।
अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः।।

—*(वृ. दै. र., पृ. सं. ३३६)*

श्रीपतिः–

कोदंडतौलिमिथुन प्रमदा नवांशे प्राप्नोति सौख्यमतुलं दयिता च।
शेषेषु सत्स्वपि तथा च्यवनोज्झिता च चापाधिके भवति कृच्चवदन्ति।।

—(वृ. दै. र., पृ. सं. ३३६)

**सिंहांशके सा पितृमन्दिरस्था कन्यांशके वित्तयुतासुशीला।**
**तुलांशके सर्वगुणास्पदा सा कीटांशके निःस्वतरा विशीला।।49।।**

सिंह के नवांश में पिता के घर में रहने वाली, कन्या के नवांश में धनवती एवं सुशीला होती है। तुला के नवांश में सर्वगुणसम्पन्ना तथा वृश्चिक के नवांश में विवाह हो तो निर्धना एवं शीलरहित होती है।।४९।।

**चापांशकाद्ये धनिनी द्वितीये भागेऽन्यसक्ता मलिनो गदाढ्या।**
**निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा।।५०।।**

धनु राशि के पूर्वार्द्ध नवांश में विवाह होने पर धनवती, धनुराशि के द्वितीय भाग के नवांश में विवाह होने पर दूसरे में आसक्त, मलिन चित्तवाली और रोगिनी होती है। मकर के नवांश निर्धना एवं गुणों से रहिता, कुंभ के नवांश में स्वामी रहिता, योग करने में तत्पर तथा मुर्झाये शरीर वाली होती है।।५०।।

**मीनांश में विवाह फल**

**मीनांशके भर्तृसुतार्थहीना शुभग्रहैर्युक्तनिरीक्षितेऽपि।**
**तस्मात्सदैवोक्त नवांशकेषु कुर्याद्विवाहं गुणसम्प्रवृद्ध्यै।।५१।।**

मीनांश में विवाह होने पर चाहे शुभग्रहों से युक्त या देखे जाने पर भी कन्या पति, पुत्र एवं धनहीना होती है। अतः सर्वदा कहे गये उक्त नवांशकों में गुणों की वृद्धि के लिए विवाह करना चाहिए।।५१।।

**अन्त्यांशकश्चेद्विशुभांशकानां मध्ये य एको न शुभप्रदः सः।**
**स एव वर्गोत्तमसंज्ञितश्चेच्छुभप्रदश्चाखिल मङ्गलेषु।।५२।।**

यदि अन्तिम नवमांश हो अथवा द्विस्वभाव राशि का नवमांश हो तो इनके मध्य में विवाह हो तो शुभफलप्रद नहीं होता। यदि वही वर्गोत्तम संज्ञक हो तो विवाहादि समस्त मङ्गल कार्यों में शुभफलप्रद होता है।।५२।।

### वर्गोत्तम नवांश के गुण

**वर्गोत्तमं विनान्त्यांशो विवाहे न शुभप्रदः।**
**वर्गोत्तमश्चेदन्त्यांशः पुत्रपौत्राभिवृद्धिदः॥५३॥**

वर्गोत्तम नवमांश को छोड़कर अन्य किसी भी लग्न के अन्तिम नवमांश में विवाह-संस्कार शुभप्रद नहीं होता। यदि वर्गोत्तम नवमांश के अन्तिम नवांश में विवाह-संस्कार हो तो पुत्र-पौत्रों की अभिवृद्धि करता है। (जैसे मिथुन लग्न में अन्तिम-नवमांश मिथुन ही होता है। अतः ऐसी स्थिति में वर्गोत्तम नवमांश में अन्तिम नवांश विवाह संस्कार में शुभ होता है अन्यथा अशुभ)॥५३॥

### नवांशदोषफल

**नवांशदोषः सकलं गुणौघं लग्नोत्थ सौम्यग्रह सम्भवं च।**
**दत्तं निहन्तीव वृकोऽजसंघं षट्वर्गजं सौम्यवियच्चराणाम्॥54॥**

लग्न से उत्पन्न, सौम्य ग्रहों से सम्भव हुए समस्त गुणों को नवांश दोष वैसे नष्ट कर देता है, जैसे बकरियों के समूह को भेड़िया नष्ट कर देता है। षड्वर्ग से उत्पन्न सौम्य ग्रहों में—॥५४॥

**विधोस्तु षष्ठाष्टमरिष्फदोषः करोति नाशं विविधं गुणौघम्।**
**लग्नांशसौम्यग्रहजं च तद्वत्सुरालवः पावन पञ्चगव्यम्॥५५॥**

चन्द्रमा षष्ठ, अष्टम तथा द्वादश स्थान में दोषकारक होते हुए विविध गुणों का नाश करता है तथा लग्नांश तथा सौम्य ग्रहों द्वारा उत्पन्न गुणों को भी वैसे ही नष्ट करता है, जैसे पवित्र पञ्चगव्य को मदिरा की एक बून्द॥५५॥

### षष्ठाष्टमद्वादश चन्द्र का फल

**षष्ठाष्टमद्वादशके शशांके स्थिते ग्रहा वर्द्धयितुं न शक्ता।**
**विवाहमुत्पन्नजमित्रमुच्चैर्वत्सं यथा वत्सलवत्सकीयम्॥५६॥**

षष्ठ, अष्टम तथा द्वादश में स्थित चन्द्रमा ग्रहों के बल में वृद्धि नहीं करता। विवाह लग्न में यदि तीन मित्र अथवा तीन उच्च ग्रहों की स्थिति हो तो उसी प्रकार दोष उत्पन्न नहीं होता जैसे वात्सल्यता में गौ अपने बछड़े को प्रेम करती है॥५६॥

**क्रमागतः-**

**अत्रिः—**

**चन्द्रो द्विपंचनवमेषु शुभः प्रदिष्टः शुक्लेथ कष्टफलदः खलु कृष्णपक्षे।**
**तुर्येष्ठमे व्ययगतोपि नरस्यनाशं कुर्यात्सचेच्छुभमिहोच्चनिजर्क्षपूर्णः॥**
**स्वर्क्षे स्वोच्चेथ मित्रर्क्षे पूर्णे वा रजनीपतिः।**
**गोचरे शुभमादत्ते निंद्योप्यावश्यके विधौ॥**

—(वृ. दै. र., अ. ७१, श्लोक-५४७-४८)

### पाप षड्वर्ग का फल

**यः पापषड्वर्गमहान्सदोषः पञ्चाङ्गसौम्य ग्रहलग्नजातम्।**
**गुणौघमम्भोधिममोघवाणः शुष्यत्यशेषंत्विवराघवस्य॥५७॥**

जो पाप षड्वर्ग में ग्रह होते हैं, वे महादोष कारक होते हैं। इस प्रकार के दोष पञ्चाङ्ग, शुभग्रह तथा लग्न से उत्पन्न गुणों को वैसे ही नष्ट कर देते हैं, जैसे भगवान् राम जी का अमोघ बाण समुद्र को सुखा देता है॥५७॥

**पाप षड्वर्गजो दोषो सकलं गुणसञ्चयम्।**
**हन्ति यद्वदघानीक हरिरिव्यक्षरद्वयम्॥५८॥**

पाप षड्वर्ग से उत्पन्न दोष समस्त सञ्चित गुणों को वैसे ही नष्ट कर देते हैं, जैसे भगवान् के दो अक्षर "हरि" सभी पापों को नष्ट कर देते हैं॥५८॥

### मङ्गलदोष का प्रभाव

**लग्नस्थभौमाष्टमसंस्थदोषो निहन्ति तत्सर्वुणान्विशिष्टान्।**
**यथाऽनृतं धर्मचयानशेषानतः परं किं च बधूवरौ च॥५९॥**

लग्न में स्थित अथवा लग्न से आठवें मङ्गल के होने का दोष समस्त विशिष्ट गुणों को वैसे ही नष्ट करता है, जैसे झूठ समस्त धर्म परायन समुदाय को नष्ट कर देता है तो फिर वरबधु के लिए क्या कहें अर्थात् विवाह लग्न में पापग्रह एवं विवाह लग्न से अष्टम मङ्गल सदैव वर्जित हैं॥५९॥

**क्रमागतः-**

**नारदः-**

कुजाष्टमो महान् दोषो लग्नादष्टमगे कुजे।
शुभत्रययुतं लग्नं त्यजेत तुङ्गे यदि॥

—(मु. चि. प्र. ६ श्लोक ८४ पी. टी.)

### अष्टम मंगलदोष

**लग्नात्कुजाष्टमो दोषो नाशयत्यखिलान्गुणान्।**
**यथा लग्नांश सम्भूतान्कलुषं धर्मसञ्चयम्॥६०॥**

लग्न से अष्टम मङ्गल दोष समस्त गुणों का नाश करता है, जैसे लग्नांश से उत्पन्न पाप धर्मसमूह को नष्ट कर देता है॥६०॥

**तनुंजातान्गुणनिचयान्निहन्ति भौमाष्टदोषः सः।**
**दम्पत्योरपि मरणं करोति यद्वत्परांगना योगः॥६१॥**

लग्न से उत्पन्न गुण समूहों को अष्टम मङ्गलदोष नष्ट कर देता है और पति-

पत्नी की मृत्यु का कारण बनता है। यदि पति की मृत्यु न हो तो दूसरी पत्नी का कारण भी बनता है॥६१॥

षष्ठशुक्रदोष

**विलग्नराशेर्भृगुषट्कदोषः करोति नाशं विविधान्गुणौघान्।**
**आधिः क्रमाद्यद्वदशेषधातून् मित्राधिमित्रग्रहजान शेषान्॥६२॥**

लग्न से और राशि से छठे शुक्र दोषप्रद होता है। ऐसा शुक्र विविध गुण समूहों को नष्ट करता है। मानसिक रोग के कारण क्रम से सभी धातुएँ नष्ट हो जाती हैं। वैसे ही मित्र, अधिमित्र ग्रहों के द्वारा उत्पन्न समस्त गुण भी नष्ट हो जाते हैं॥६२॥

**भृगुषट्काख्यो दोषो वरवध्वोर्द्राग्वियोगकृन्नूनम्।**
**कन्यां विवाहितां तां भर्तृघ्नीं वा करोत्यचिरात्॥६३॥**

छठे शुक्र को दोष निश्चित तौर पर वर-बधु का वियोग करवाता है। विवाहित कन्या शीघ्र ही पति की मृत्यु का कारण बनती है॥६३॥

नक्षत्रसन्धि या नक्षत्रगण्डान्त योग

**यदन्तरालं पितृसार्पधिष्ण्ये मूलेन्द्रयोरश्विनपौष्णयोश्च।**
**भसन्धिगण्डान्तमिति द्वयं तन्नाड्यः प्रमाणं शुभकर्म हन्ति॥६४॥**

मघा एवं आश्लेषा, मूल एवं ज्येष्ठा, अश्विनी एवं रेवती; इन नक्षत्रों के अन्तराल को नक्षत्र सन्धि या नक्षत्र गण्डान्त कहा जाता है, इन नक्षत्रों का नाड़ी प्रमाण दो घटी तक होता है और ये सभी शुभकृत्यों को नष्ट करता है॥६४॥

**अहिवासवपौष्णानामन्त्ययामार्द्धमृक्षसन्धिः स्यात्।**
**पितृमूलाश्विभानामादौ यामार्द्धमृक्षगण्डान्तम्॥६५॥**

आश्लेषा, धनिष्ठा, रेवती इनका अन्तिम भाग यामार्द्ध एवं नक्षत्र सन्धि के रूप में कहा गया है। इसी प्रकार मघा, मूल, अश्विनी; इन तीन नक्षत्रों का आद्य भाग यामार्द्ध तथा नक्षत्र गण्डान्त कहा जाता है॥६५॥

प्रहरार्द्धकालनिर्णय

**पुनः पुनः पञ्चमषष्ठतिथ्योर्यदन्तरालं प्रहरार्द्धकालः।**
**तल्लग्नजातं गुणसञ्चयं यत्क्ष्वेडं यथाहन्तिनरं हि नूनम्॥६६॥**

तत्पश्चात् पञ्चमी एवं षष्ठी तिथियों का जो अन्तराल है, उसे प्रहरार्द्धकाल कहा जाता है। यह योग लग्न से उत्पन्न गुण सञ्चय को वैसे ही नष्ट कर देता है, जैसे गन्ने के डन्डे को मनुष्य निश्चित ही नष्ट कर देता है॥६६॥

### घटिकार्द्धिनिर्णय

**लग्नान्तरालं घटिकार्द्धमेतत्कुलीरहर्योरलि चापयोश्च।**
**मीनाजयोः सर्वगुणान्निहन्ति लोभो यथा सर्वगुणान्नरस्य।।६७।।**

लग्नों को जो अन्तराल होता है, उसे घटिकार्द्ध संज्ञा दी गई है। यह कर्क, सिंह, वृश्चिक धनु, मीन एवं मेष राशियों में घटित होता है। यह समस्त गुणों को वैसे ही नष्ट करता है, जैसे लालच मनुष्य के सभी गुणों को नष्ट करता है।।६७।।

### खार्जूर चक्र का समांघ्रिदोष

**खार्जूर चक्रस्य समांघ्रिदोषो विलग्नसम्भूतगुणानशेषान्।**
**शुभग्रहोत्थानपि तान्निहन्ति दारिद्र्यमेकं गुणसंहतिं यत्।।६८।।**

खार्जूर चक्र का समांघ्रि दोष (नक्षत्रचरणभेद दोष) लग्न से उत्पन्न समस्त गुणों को तथा शुभग्रहों द्वारा उत्पन्न गुणों को वैसे ही नष्ट करता है, जैसे एक गरीबी समस्त गुणसमुदाय को नष्ट कर देती है।।६८।।

**पादेन पादं विनिहन्ति तस्य राशेर्नवांशं हि नवांशकेन।**
**ग्रहोऽपि पादेन न कृत्स्नधिष्ण्यं नवांशकेनापि न कृत्स्नधिष्ण्यम्।।६९।।**

पाद के द्वारा पाददोष नष्ट होता है और राशि नवांश दोष नवांशक से नष्ट हो जाता है। ग्रह भी पाद के द्वारा समस्त नक्षत्रों का और नवांश के समस्त नक्षत्र दोषों को नष्ट नहीं करता।।६९।।

**न सर्वराशेरुदयो विलग्नं वेधो न सर्वर्क्षभवः कदाचित्।**
**इष्टांशकं लग्नमुशन्ति तज्ज्ञा विरुद्धपादा अपि भस्य शस्ताः।।70।।**

सभी राशियों का उदय और लग्न का वेध कभी भी सभी नक्षत्रों के गुणों को नष्ट नहीं करता। इष्ट नवांश और लग्न से उत्पन्न विरुद्धपाद भी नक्षत्रों के प्रशस्त होते हैं।।७०।।

### पाददोष, नक्षत्रदोष प्रभाव

**पादेन दूष्यं सकलं च धिष्ण्यं चेद्धिष्ण्यदोषाद्भगणं च कृत्स्नम्।**
**गणस्य दोषात्सकलं च दूष्यामिति प्रसङ्गस्थित पाद एव।।७१।।**

पाद दोष से सम्पूर्ण नक्षत्र और नक्षत्र दोष से सम्पूर्ण भगण दूषित होता है। गणदोष से सभी दूषित होते हैं! अतिप्रसङ्ग में नक्षत्र पाद को मानना चाहिए।।७१।।

**विषप्रदग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षतादृते।**
**तथैव पादो न शुभोऽवशिष्टाः पादाः शुभाश्चेति पितामहेन।।७२।।**

विष प्रदग्ध बाण से मृत मृग का मांस उसी स्थान पर विकृत होता जहाँ बाण

लगता है सम्पूर्ण मांस नहीं। इसी प्रकार ग्रह से दग्ध नक्षत्र चरण दोषयुक्त होता है। सभी चरण नहीं। यह पितामह ब्रह्मा का कहना है।।७२।।

**अतोऽन्त्यपादमादिगो द्वितीयगस्तृतीयम्।**
**तृतीयगो द्वितीयकं चतुर्थगस्तु चादिमम्।।७३।।**

इसलिये अन्त्यपाद का आदिम पाद से, द्वितीय चरण का तीसरे से, तृतीय चरण का द्वितीय चरण से, चतुर्थ का प्रथम चरण से वेध होता है।।७३।।

**भिनत्ति वेधकृद्ग्रहो न चाऽन्यपादमादरात्।**
**असम्भवाच्छशीनयोर्दृशोः समत्वमत्र वै।।७४।।**

वेध करने वाले ग्रह अन्य चरणों से वेधित नहीं होते, सूर्य एवं चन्द्रमा इन दोनों के कारण असम्भव होने पर भी समत्व जानना चाहिए।।७४।।

**पाद एव न शुभः शुभ ग्रहैर्विद्ध इत्यखिलशास्त्रमतं हि।**
**क्रूरविद्धमशुभं न शोभनं शोभनेषु सकलं न पादतः।।७५।।**

शुभग्रहों द्वारा विद्ध होने पर एक चरण शुभ नहीं होता। यह पूर्णतया शास्त्र सम्मत है, क्रूर ग्रह द्वारा विद्ध व पाप ग्रह से युक्त नक्षत्र सम्पूर्ण शुभ नहीं होता, न कि एक चरण अशुभ होता है।।७५।।

**खार्जूरक, यमघण्टक इत्यादि दोषों का फल**

**खार्जूरं यमघंटकश्च कुलिकश्चेत्येव वारोद्भवा।**
**दोषा लग्नतदंश सौम्य खचरप्रोद्भूतसर्वान्गुणान्।**
**निघ्नन्त्येव यथा शरीरमखिलं दोषत्रयः प्रोत्कटा-**
**श्चान्योऽन्यागुणसञ्चयानपि महान्यामार्द्धतुल्याः पृथक्।।७६।।**

खार्जूरक, यमघण्टक, कुलिक तथा वार से उत्पन्न दोष, लग्न, लग्नांश, शुभग्रहों द्वारा उत्पन्न सभी गुणों को वैसे ही नष्ट करता है, जैसे शरीर में विकृत हुए तीनों दोष (वात, पित्त, कफ) शरीर को नष्ट करते हैं। परस्पर सञ्चित गुणों का समूह यामार्द्ध सदृश भिन्न ही होता है।।७६।।

**निधनं प्रहरार्द्धेषु निःसत्वं यमघण्टके।**
**कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः।।७७।।**

प्रहरार्द्ध में निधन, यमघण्टक में गरीबी, कुलिक दोष में सर्वनाश; परन्तु ये तीनों दोष रात्रिकाल में दोषप्रद नहीं होते।।७७।।

**सकल नक्षत्रों में विषघटीज्ञान**

**खाक्षा ५० जिना २४ व्योमगुणा ३० खवेदा ४०।**
**इन्द्राः १४ कुदस्राः २१ खगुणा ३० नखाश्च २०।।**

दन्ताः ३२ खरामाः ३०खयमाः २० पुराणाः १८।
क्ष्माबाहवो २१ विंशति २० रब्धिचन्द्राः १४॥७८॥
इन्द्रा १४स्तु काष्ठा १० मनवः १४ षडक्षा ५६।
वेदाश्विनो २४ व्योमभुजा२० दशा १०ऽऽशाः १०॥
नागेन्दवो १८ भूपतयो १६ऽब्धिदस्रा २४।
व्योमाग्नयो ३० दस्रमुखर्क्षकाणाम्॥७९॥

पचास, चौबीस, तीस, चालीस, चौदह, इक्कीस, तीस, बीस, बत्तीस, तीस, बीस, अट्ठारह, इक्कीस, बीस, चौदह, चौदह, दस, चौदह, छप्पन, चौबीस, बीस, दस, दस, अट्ठारह, सोलह, चौबीस, तीस क्रम से अश्विनी नक्षत्र के शुरू से॥७८-७९॥

**क्रमागतः–**
**नारदः–**

तयोरूपचयस्थाने तदा लग्नं गतं शुभम्।
खमार्गणा वेदपक्षाः खरामाः शून्यसागराः॥
वार्द्धिचन्द्रा रूपद्रसाः खरामा व्योमवाहवः।
द्विरामा खाग्नयः शून्यदस्रकुंजरभूमयः॥
—(ना. सं., अ. २१, श्लोक-५६-५७)

आभ्यः परस्ताद्विषनाडिकाख्यास्त्याज्याश्चतस्रः खलु शोभनेषु।
विषाख्यनाडीषु कृतं शुभं यद्विनाशमायात्यचिराच्च सर्वे॥८०॥

नक्षत्रों के उपर्युक्त कथित घटियों के ऊपर विषनाड़ी कही गई हैं! चार नाड़ी तक शुभ कार्यों में त्याज्य है। विषसंज्ञकनाड़ी में किये गए समी शुभ कार्यों का नाश शीघ्र ही होता है॥८०॥

**क्रमागतः–**
**नारदः–**

रूपपक्षा व्योमदस्रा वेदचन्द्राश्चतुर्दश।
शून्यचन्द्रा वेदचन्द्राः षट्पंचवेदवाहवः॥
शून्यदस्राः शून्य चन्द्राश्शून्य चन्द्रा गजेन्दवः।
तर्कचन्द्रा वेदपक्षाः खरामाश्चाश्विनी क्रमात्॥
आभ्यः परास्युश्चतस्रो नाडिका विषसंज्ञिकाः।
विवाहादिषु कार्येषु वर्ज्यास्ता विषनाडिका॥
—(ना. सं., अ. २१, श्लोक-५८-६०)

**कुर्वन्ति नाशं विषनाडिकास्ता लग्नाश्रितानंशगुणान्विशेषान्।**
**जन्तून्यथा कुष्ठभङ्गदरार्श व्याघातशूलक्षयवातरोगा:।।८१।।**

ये विषनाड़िकाएं लग्न से आश्रित अंश गुणों को विशेषरूप से नष्ट कर देती हैं। जैसे कुष्ठ, भगन्दर, अर्श (बवासीर), व्याघात, शूल, क्षय एवं वातरोग मनुष्यों को नष्ट कर देते हैं।।८१।।

**क्रमागत:–**

**कश्यप:–**

वियदवाणा वेददस्रा खरामा व्योमसागरा:।
वेदचन्द्राश्चन्द्रदस्रा खरामा व्योमबाहव:।।
नेत्राग्नयो व्योमगुणा: शून्यदस्रा गजेन्दव:।
क्ष्माबाहवो वियद्दस्रा: शक्राश्चन्द्रा: खभूमय:।।
वेदचन्द्रास्तर्कवाणा वेददस्रा खबाहव:।
व्योमेन्दवो व्योमचन्द्रा धृतयस्तर्कभूमय:।।
वेदाश्विन: खरामा: स्युर्दास्रर्क्षाद्घटिका क्रमात्।
आभ्य परस्तात्क्रमशश्चतस्रो विषनाडिका:।।

—(मु. चि. ६, प्र० ४७-४९ श्लोक, पी. टी.)

**स्पष्टार्थ सारिणी**

| नक्षत्र | अश्वि. | भरणी | कृ. | रोहि. | मृग् | आर्द्रा | पुन | पुण्य | आश्लेष |
|---|---|---|---|---|---|---|---|---|---|
| घटी के | ५० | २४ | ३० | ४० | १४ | २१ | ३० | २० | ३२ |
| पश्चात् तक | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| नक्षत्र | मघा | पू.फा. | उ.फा. | हस्त | चित्रा | स्वा. | विशा. | अनु. | ज्येष्ठा |
| घटी के | ३० | २० | १८ | २१ | २० | १४ | १४ | १० | १४ |
| बाद तक | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| नक्षत्र | मूल | पू.षा. | उ.षा. | श्र. | धनि. | शत | पू.भा. | उ.भा. | रेवती |
| घटी के | ५६ | २४ | २० | १० | १० | १८ | १६ | १४ | ३० |
| अनन्तर तक | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |

**नारद:–**

विवाहव्रतचूडासु गृहारम्भप्रवेशयो:।
यात्रादिशुभकार्येषु विघ्नदा विषनाडिका:।।

—(पी. टी. मु. चि. प्र. ६ श्लोक ४७)

यात्राविवाहादिषुमङ्गलेषु सर्वेषु नूनं विषनाडिकाश्च।
कुर्वन्ति कतुर्मरणं हि शीघ्रं कृतप्रमाणायुष एव धात्रा।।

—(ज्यो. नि. ७४, पृ. १४ श्लोक)

विषघटियों का परिहार

विषनाड्युत्थितं दोषं हन्ति सौम्यर्क्षगः शशी।
नेत्रदृष्टोथवा स्वीयवर्गस्थोः लग्नगोऽपि वा।।
चन्द्रो विषघटी दोषं हन्ति केन्द्रत्रिकोणगः।
लग्नं विना शुभैदृष्टं केन्द्रे वा लग्नपस्तथा।।

*—(वृ. दै. र. प्र. ३७ श्लोक ७१३, १४, ज्यो. नि., पृ. ७४)*

**कुर्वन्त्युद्वाहितां कन्यां विधवां वत्सरत्रयात्।**
**अन्यस्मिन्मङ्गले ताश्च निधनं वाऽथनिर्धनम्।।८२।।**

पूर्व कथित विषनाड़ियां विवाहित कन्या को तीन सालों के अन्दर विधवा बना देती हैं। अन्य मङ्गल कार्यों में मृत्यु अथवा निर्धनता को देने वाली होती हैं।।८२।।

**क्रमागतः-**

**मुहूर्त्तगणपतिः—**

"खवाणाश्च जिनास्त्रिंशत् खवेदा मनवः क्रमात्।
स्वर्गास्त्रिशन्नखा दन्ताः खरामा विंशतिर्धृतिः।।
भूनेत्राः खयमाः शक्राः रूद्राः काष्ठश्चतुर्दश।
षट्पञ्चाशज्जिनाश्चैक विंशतिः ककुभो दिशः।।
धृतिर्भूया जिनास्त्रिंशदश्विभाद् घटिकाः स्मृताः।
आभ्यश्चतुष्ट्य त्याज्यं घटिकानां विषभिधम्।।"

—(प्र० १५, श्लोक-१८७-८९)

लग्न, लग्नेश, राशि, राशीश्वरफल

**यस्यास्तु लग्ने तदधीश्वरे वा राशौ तदीशेऽथ विलग्नगे वा।**
**स मृत्युमाप्नोति तदा मनोजस्त्रिनेत्रभालाम्बकवह्निनेव।।८३।।**

जिसके लग्न में लग्नेश अथवा राशि में राशीश हो और राशीश लग्न में हो तो जातक मृत्यु को वैसे ही प्राप्त होता है, जैसे भगवान् शङ्कर जी के मस्तक के तृतीय नेत्र को अग्नि से कामदेव भस्म होता है।।८३।।

**द्वादशं भवति जन्मलग्नतो लग्नेशमर्थहरमत्र योषिताम्।**
**अष्टमं पुनरतोऽपि मृत्यवे राशितोऽपि फलमेतदेव च।।८४।।**

लग्नेश जन्मलग्न से द्वादश में हो तो स्त्रियों का धन लूटने वाला और

लग्नेश अष्टम स्थान में हो तो मृत्युप्रद होता है, ऐसे ही फलकथन राशि से भी करना चाहिए॥८४॥

**जन्मोदयर्क्षान्निधने विलग्ने तदीश्वरेणोपगतेऽथवा स्यात्।**
**कृतो विवाहो भयमृत्युकारी त्रातुं विधाताऽपि न तां समर्थः॥85॥**

जन्मलग्न और जन्मराशि लग्न से अष्टम हो अष्टमेश लग्न में हो इस मुहूर्त्त में विवाह हो तो भयप्रद एवं मृत्युकारक होता है, इससे स्वयं ब्रह्मा भी रक्षा करने में समर्थ नहीं होते॥८५॥

**त्याज्यं तयोर्नैधनभं विलग्नं तदंशके वाऽथ तदीश्वरं च।**
**तस्मात्स्वजन्मर्क्षनवांशयोश्च लग्नांशकौ नैधनगौ विवर्ज्यौ॥८६॥**

वर-कन्या दोनों के लग्न से अष्टम राशि, राश्यांश तथा स्वामी के दोष को त्याज्य करना चाहिए और इसी प्रकार अपने जन्मनक्षत्र, राशि नवांश, लग्नांशक अष्टम में हों तो भी त्याज्य करना चाहिए॥८६॥

### लग्नेश-अष्टमेश का मित्रत्वेन फल

**जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ।**
**जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः॥८७॥**

जन्म लग्नेश तथा अष्टमेश परस्पर मित्र व्यवस्था में हों तो जन्मराशि, अष्टम राशि से उत्पन्न दोषों को स्वभावत: नष्ट कर देता है॥८७॥

### अकालवृष्टि से उत्पन्न दोष

**अकालवृष्टिः प्रभवः सदोषः करोति मृत्युं शुभकार्यकर्तुः।**
**त्रातुं यथा सर्वगुणास्त्वशक्तास्तां बन्धुवर्गा विषवह्निदग्धम्॥88॥**

अकाल वृष्टि से उत्पन्न दोष कार्य करने वाले के लिए मृत्युप्रद होता है। जैसे सर्वगुणसम्पन्न, सशक्त, व्यक्ति भी अपने बन्धुवर्ग जो विष एवं अग्नि से दग्न हों तो उनको बचा नहीं सकता॥८८

**अकालवृष्टिप्रभवः स दोषः करोति मृत्युं वरकन्योश्च।**
**सीतावियोगप्रभवः सुदीर्घः कोपो यथा दाशरथेर्दशास्यम्॥८९॥**

असमय वृष्टि से उत्पन्न दोष वरवधू के लिए मृत्युप्रद होता है। जैसे सीता के वियोग से उत्पन्न बहुत गहरे क्रोध से श्रीराम ने दशमुखवाले रावण का विनाश कर दिया॥८९॥

### कुमुहूर्त्तदोष

**करोति निःस्वं कुमुहूर्त्तदोषः कुमारमुद्वाहितमाशु नूनम्।**
**सप्ताङ्गराज्योद्धतराजरत्नं नलं यथा द्यूतमिवात्मकर्म॥९०॥**

कुमुहूर्त्तदोष निश्चय से विवाहित कुमार को शीघ्र ही निर्धन करता है। जैसे सप्ताङ्ग राज्य से उद्धत राजरत्न राजा नल भी जुआ (द्यूत) को अपना कर्म मानकर निर्धन हो गये॥९०॥

**वरस्य लक्ष्मीं निखिलं निहन्ति संवत्सरार्द्धात्कुमुहूर्त्तदोषः।**
**दुर्वाससः शाप इव प्रमत्तमहेन्द्रलक्ष्मीमसमां समग्राम्॥९१॥**

वर की सम्पूर्ण लक्ष्मी (धन) को संवत्सरार्द्ध का कुमुहूर्त्त दोष वैसे ही नष्ट करता है, जैसे दुर्वासा ऋषि के शाप से मदमत्त देवराज इन्द्र की सम्पूर्ण लक्ष्मी नष्ट हो गई थी॥९१॥

**अर्यम्णो भानुवारे शशधरदिवसे राक्षसब्रह्मसंज्ञौ।**
**पित्रग्नी द्वौ कुजाहे शशिसुतदिवसेऽथाभिजित्संज्ञकः सः।**
**जीवाहे राक्षसाख्यो भृगुसुतदिवसे ब्रह्ममैत्रावहीशौ।**
**सौरावेते विवर्ज्यास्त्वधननिधनदा मङ्गले दुर्मुहूर्त्ताः॥९२॥**

रविवार अर्यमा, सोमवार ब्रह्मराक्षस संज्ञक, पितर एवं अग्नि मङ्गलवार, बुधवार अभिजित् संज्ञक, बृहस्पतिवार राक्षस संज्ञक, शुक्रवार का ब्रह्म मैत्रसंज्ञक, शनिवार को सार्प संज्ञक होने से निर्धनता एवं मृत्युप्रद दुर्मुहूर्त्तों में मङ्गलकार्य विवर्जित करने चाहिए॥९२॥

**क्रमागतः—**

**नारदः—**

अर्यम्णोर्के तुहिनकिरणे राक्षस ब्राह्मसंज्ञौ।
पित्राग्नेयौ क्षितिसुतदिने चन्द्रपुत्रोभिजिच्च॥
पितृब्राह्मौ भृगुसुतदिने राक्षसाप्यौ च जीवे।
भौजङ्गेशौ सवितृतनये वर्जनीयौ मुहूर्त्तौः॥

—(वृ. दै. र., अ. ३०, श्लोक-५)

**व्यतिपात-वैधृति योगों का फल**

**दोषो महापात इति प्रसिद्धः स वैधृतो हन्ति बधूं वरं च।**
**तं रक्षितुं लग्नगुणा अशक्ताः स्वबान्धवास्तेऽशनिनोपघातम्॥93॥**

व्यतिपात एवं वैधृति योग दोनों प्रसिद्ध हैं। इन योगों में विवाह हो तो वरबधू दोनों के लिए विनाश होता है। उनकी रक्षा करने के लिए लग्न के गुण वैसे ही असमर्थ हैं, जैसे अपने बन्धु-बान्धव वज्रपात होने पर रक्षा नहीं कर सकते॥९३॥

**क्रमागतः—**

"वैधृति व्यतिपाताख्यौ सम्पूर्णौ वर्जयेच्छुभे।
वज्रविषकम्भयोश्चैव घटिकात्रयमादिकम्॥

परिघार्धं पञ्चशूले व्याघाते घटिका नव।
गण्डाति गण्डयोः षट् च हेयाः सर्वेषु कर्मसु।।

—(मुहूर्त्त गणपति, प्र. ५, श्लोक-५२)

सूर्यसिद्धान्ते–

व्यतीपातः प्रसिद्धोऽस्ति संज्ञाभेदेन वैधृतिः।
स कृष्णो दारुणवपुर्लोहिताक्षो महोदरः।।
यच्छुमानां विनाशाय नदन्निव पतत्ययम्।
विनाशयति पातोऽस्मिल्लोकानामसकृद्यतः।।
सर्वानिष्टकरो रौद्रो भूयोभूयोऽभिजायते।।

—(१० प्र., श्लोक ४)

**शास्त्रात्समानीतमहातिपातः सवैधृतो हन्तिबधूं वरं च।**
**त्रिसप्तवाराणि च जामदग्न्यो क्रोधोऽचिरात्क्षत्र कुलं समस्तम्।।94।।**

शास्त्र में प्रतिपादित व्यतिपात-वैधृति इत्यादि योग वरवधू को तीन या सात वारों में नाश करते हैं। जैसे जामदग्नि ऋषि के क्रोध से शीघ्र ही सम्पूर्ण क्षत्रियकुल नाश हुआ।।९४।।

**लग्नास्तशुद्धिस्तु महान्सदोषः करोति मृत्युं वरकन्ययोश्च।**
**त्रातुं यथा लग्नगुणास्त्वशक्तास्तं बन्धुवर्गा इव सर्पदष्टम्।।९५।।**

लग्न की अशुद्धि एक महान दोष है, जो वरबधू दोनों के लिए मृत्युदायक होता है। लग्न के गुण रक्षा करने में वैसे ही असमर्थ होते हैं, जैसे साँप के काटने पर बन्धुवर्ग असमर्थ होता है।।९५।।

उदयास्तशुद्धिः

**इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तदसञ्युते वा।**
**अस्तांशकेऽप्येवमदृष्ट युक्ते स्वस्वामिना नाशमुपैति कन्या।।९६।।**

अभीष्ट लग्न का नवांश यदि अपने नवांशपति द्वारा नहीं देखा जाए या नवांशपति से असञ्युत हो तो वर की मृत्यु होती है। अस्तांशक लग्न में अपने स्वामी द्वारा अदृष्ट या असञ्युत हो तो कन्या की मृत्यु होती है।।९६।।

**क्रमागतः–**

**नारदः–**

लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ।
न चेद्वान्योन्यपतिना शुभमित्रेण वा तथा।।
वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशके।
एवं तौ वीक्षितयुतौ मृत्युर्वध्वाः करग्रहे।।

—(मु. चि. ६ प्र. ७७ श्लोक पी. टी.)

वराहः-

शुद्धिस्त्विहस्यान्न यदोदयांशो लग्ने न चास्तांशमुपैति सिद्धिम्।
तदा सुहृत्सौम्य निरीक्षितो यः शुभाय स स्यात्प्रवदन्ति सन्तः।।

—(मु. चि. ६ प्र. ७८ श्लोक पी. टी.)

कश्यपः-

राश्यंशौ मित्रसौम्येन वीक्षितौ वाप्यसंयुतौ।
उदयास्तांशयोः शुद्धिस्त्रिविधा मंगलप्रदा।।

—(मु. चि. ६ प्र. ७८ श्लोक पी. टी.)

**उदयांशः स्वनाथेन मित्रसैम्येन सञ्युतः।**
**प्रेक्षितो वा तथास्तांशो दम्पत्योः पुत्रपौत्रदः।।९७।।**

उदित लग्नांश अपने स्वामी, मित्रग्रह या शुभग्रह से सञ्युत अथवा देखा जाता हो तो लग्न अस्तांश होने पर भी दम्पति के लिए पुत्र-पौत्र प्रद होता है।।९७।।

**उत्पातभोपप्लवभोग्रखेटविद्धर्क्षतद्धं वर कन्ययोस्तु।**
**विनाशदं लग्नगुणास्त्वशक्तास्त्रातुं यथा पातकिनं स्वकीयाः।।98।।**

उत्पात संज्ञक नक्षत्र भूकम्प संज्ञक नक्षत्र, उग्र संज्ञक ग्रह से वेधित नक्षत्र वर-कन्या के लिए विनाश प्रद होते हैं। लग्न के गुण उसकी रक्षा करने में वैसे ही असमर्थ होते हैं, जैसे अपनी रक्षा में पापी व्यक्ति असमर्थ होता है।।९८।।

**उत्पातभं ग्रहणभं क्रूरविद्धं स्थितं च भम्।**
**दहतीव शुभं कर्म राघवाग्निशरोऽम्बुधिम्।।९९।।**

उत्पात नक्षत्र, ग्रहण नक्षत्र, पापीग्रहों से वेधित या पापग्रहों के साथ स्थित नक्षत्र शुभ कर्मों को वैसे ही नष्ट करता है, जैसे भगवान् श्रीराम के अग्नि बाण से समुद्र सूख गया।।९९।।

### महादोष दूषित लग्न विचार

**लग्नं महादोष विदूषितं यन्न तद् गुणास्त्राण विधौ समर्थाः।**
**राज्ञा धृतं तं पुरुषं च यद्वदन्ये जना बन्धुजनाश्च सर्वे।।१००।।**

लग्न को महादोष दूषित करे तो लग्न के गुण रक्षा करने में असमर्थ होते हैं। जैसे कानून में समर्थ राजा से अपराधी पकड़े जाने पर अन्य लोग तथा उसके बन्धुजन लोग रक्षा नहीं कर पाते।।१००।।

**लग्नस्थजीवज्ञसितप्रयाता गुणाः परित्रातुमशंकुरेव।**
**लग्नं महादोषविदूषितं यद्भ्रष्टं द्विजं बन्धुजना यथैव।।१०१।।**

लग्न में स्थित बृहस्पति, बुध एवं शुक्र द्वारा आगे बड़े हुए लग्न के गुणों को शंकु के विना ही बचाने में समर्थ होते हैं, ऐसी परिस्थिति में यदि लग्न महादोष से

दूषित हो तो लग्न के गुणों को वैसे ही नष्ट करता है, जैसे भ्रष्ट ब्राह्मण की उसके भाई-बन्धु रक्षा नहीं कर सकते॥१०१॥

**लग्नांशसौम्यग्रहवर्गजा ये गुणा समर्था न च रक्षितुं तत्।**
**लग्नं महादोष विदूषितं यच्छूद्रार्थयज्ञा इव यायजूकम्॥१०२॥**

लग्नांश के सौम्य ग्रहों के वर्ग में जो गुण हैं, उन सभी गुणों की रक्षा लग्न महादोष से दूषित होने पर वैसे ही नहीं होती जैसे शूद्र की तरह यज्ञ में आचार्य॥१०२॥

**मित्रादिमित्रौच्चगृहांश जाता गुणास्त्वशक्ताः परिरक्षितुं यत्।**
**लग्नं महादोष विदूषितं यद्धर्मा यथाऽधर्मपरं द्विजेन्द्रम्॥१०३॥**

मित्र, अधिमित्र, उच्च गृहांश से उत्पन्न सभी महादोष से दूषित लग्न की रक्षा करने में उसी प्रकार असमर्थ हैं, जिस प्रकार धर्म-अधर्म में रत ब्राह्मण की रक्षा नहीं कर सकता॥१०३॥

**वर्गोत्तमांशोद्भवचन्द्रजाता गुणास्तदुर्द्धर्त्तुमिवासमर्थाः।**
**लग्नं महादोषविदूषितं यद्गुणा यथा निर्गुणिनं च सर्वे॥१०४॥**

वर्गोत्तमांश (वर्गोत्तम नवांश) तथा चन्द्रमा से उत्पन्न सभी गुण महादोष से दूषित लग्न का उद्धार करने में वैसे ही असमर्थ हैं, जैसे पूर्णतया गुणरहित व्यक्ति की रक्षा गुण नहीं कर सकते॥१०४॥

**लग्नं महादोषविदूषितं यद्वाप्य सौम्यग्रहकेन्द्र जाताः।**
**व्यर्था गुणाः पूर्णसुधाकरस्य करा जनानन्दकरा इवान्धम्॥१०५॥**

महादोष से दूषित लग्न को शुभ ग्रह केन्द्र में आने से जो गुण होते हैं, वे वैसे ही लग्न की रक्षा करने में असमर्थ हैं, जैसे पूर्ण चन्द्रमा की किरणों का आनन्द अन्धे व्यक्ति के लिए व्यर्थ होता है॥१०५॥

**अवाप्यवन्ध्याः सुगुणास्तदग्धं लाभस्थखेटस्य गृहोच्चजाताः।**
**लग्नं महादोषविदूषितं यत्कटाक्षपाता इव सुन्दरीणाम्॥१०६॥**

उच्चस्थ ग्रहों तथा लाभस्थान में स्थित ग्रहों द्वारा उत्पन्न श्रेष्ठ गुण वन्ध्या स्त्री के लिए अन्धकार दूर नहीं करते। वैसे ही महादोष से दूषित लग्न की रक्षा उस प्रकार नहीं हो सकती जैसे सुन्दर स्त्रियों के कटाक्षपातों को अन्धा व्यक्ति नहीं समझता॥१०६॥

**धनत्रिकोणस्थ शुभग्रहोत्थगुणा निरर्थास्तदवाप्य सर्वे।**
**लग्नं महादोष विदूषितं यद्विबीजिनं यद्वदपत्ययोगः॥१०७॥**

महादोष से दूषित लग्न के लिए द्वितीय स्थान एवं लग्न, पञ्चम नवम स्थान स्थित शुभग्रहों से उत्पन्न सभी गुण वैसे ही निरर्थक हो जाते हैं, जैसे वीर्यरहित पुरुष के लिए सन्तान योग॥१०७॥

**अयं गुणो दोषममुं निहन्तीत्युक्तं हि यत्रोभयनामपूर्वम्।**
**गुणः स एवान्यगुणो न शक्तो दोषोऽपि तद्वद् गुणघातुकः सः॥१०८॥**

यह गुण उस दोष को विनष्ट करता है, ऐसा संज्ञापूर्वक दोनों विधियों से कहा है, वही गुण अन्य गुणों द्वारा सभी दोषों को गुणघातक होने के कारण रक्षा करने में असमर्थ होता है॥१०८॥

**चन्द्रमा उपभोग से शुभफल**

**गन्तव्यधिष्ण्यं खलु मुक्तभं यत्क्रूरैर्महोत्पात विदूषितं तत्।**
**चन्द्रोपभोगादमलं तदानीं शुभेषु कार्य्येषु शुभप्रदं च॥१०९॥**

गन्तव्य नक्षत्र से विमुक्त नक्षत्र जो पापग्रहों द्वारा अथवा महोत्पातों से दूषित दोषयुक्त होने पर भी चन्द्रमा के उपभोग से पवित्र हुए तत्क्षण ही शुभकार्यों में शुभफलप्रद हो जाते हैं॥१०९॥

**द्युरात्रिमध्यमखिलमङ्गलेषु यदार्द्धकालः परिवर्जनीयः।**
**तदाऽभिजिद्ब्राह्ममुहूर्त्तकत्वाद्दोषदः सोऽपि शुभप्रदः सः॥११०॥**

समस्त मङ्गल कार्यों में द्विरात्रि के मध्य में जो अर्द्धकाल होता है, उसका त्याग करना चाहिए। तथापि अभिजित् एवं ब्रह्ममुहूर्त्त में दोष होने पर भी शुभफलप्रद हो जाता है॥११०॥

**उक्ताखिलं दोषनिरूपणं यन्निरूपणं स्वल्पमहागुणानाम्।**
**वक्ष्येऽन्य पक्षस्य विदूषणार्थं स्वपक्षसंस्थापन निर्णयार्थम्॥१११॥**

जो समस्त दोष निरूपण तथा स्वल्प महागुणों का निरूपण जो पूर्व कर चुके हैं। अब अन्यपक्ष को दूषित करने वाले तथा अपने पक्ष की संस्थापना करने वाले निर्णयार्थ को कहते हैं॥१११॥

**मित्राधिमित्र ग्रहों का शुभफल**

**मित्राधिमित्रस्वगृहोच्चमूलत्रिकोणवर्गोत्तमगग्रहोत्थाः।**
**तदंशकेन्द्रोपचयत्रिकोणमहादशाधीशबलाधिकोत्थाः॥११२॥**

मित्राधिमित्र, स्वक्षेत्री, स्वोच्च, मूलत्रिकोण वर्गोत्तम में गए हुए ग्रह तथा उनसे उत्पन्न नवांश, केन्द्र, उपचय स्थान, त्रिकोण एवं महादशा के स्वामी अत्यन्त बलशाली होते हैं॥११२॥

**लग्नांशकाधीशशुभावलोकसंयोगतद्वर्गजतद्गुणोत्थाः ।**
**ये सिद्धयोगामृत सिद्धयोगास्थिति प्रयाताश्च महागुणाः स्युः॥113॥**

लग्न नवांश का स्वामी शुभ ग्रहों द्वारा दृष्ट अथवा सञ्युत उस वर्ग से उत्पन्न गुण तथा सिद्धयोग, अमृत सिद्धयोगों की स्थिति महागुणों को अग्रसर करती है॥११३॥

**ये चान्यसामान्यगुणाः सदैव स्वभावसंसिद्धगुणा यदास्ते।**
**किं चाल्पदोषानपि लग्नजातान्हन्तुं न शक्ताश्च कदाचिदेव॥११४॥**

जो अन्य सामान्य गुण सदैव अपने स्वभाव से सिद्ध गुण लग्न के स्वल्प दोषों को भी नष्ट करने में कभी भी सशक्त नहीं होते हैं॥११४॥

**लग्न से उत्पन्न दोषों का नाश**

**मित्रर्क्षगो मित्रनवांशगो वा शुभग्रहस्तेन निरीक्षितो वा।**
**यदा विलग्नोपगतः स खेटश्चेद् हन्तिदोषानपि लग्नजातान्॥११५॥**

मित्र राशि अथवा मित्रराशि के नवांश में स्थित ग्रहों को शुभग्रह देखते हो अथवा जन्मलग्न में गये हुए वे ग्रह लग्न से उत्पन्न दोषों को भी नष्ट कर देते हैं॥११५॥

**लग्नगत दोषसमूहों की निवृत्ति**

**शुभोऽधिमित्रर्क्षगतस्तदंशसंस्थोऽपि वा तेन निरीक्षितो वा।**
**सलग्नगो दोषचयं निहन्ति रामो यथा रावणदैत्यवृन्दम्॥११६॥**

शुभग्रह, अपने मित्र राशि, मित्र नवांश में स्थित हों या देखे जाते हों तो लग्नगत दोष समूहों को वैसे ही नष्ट करते हैं, जैसे भगवान् श्रीराम ने रावण के राक्षस समूहों को नष्ट किया था॥११६॥

**क्रमागतः–**

**लल्लः—**

क्रूरैर्लग्नयुतं त्याज्यं मङ्गलेष्वखिलेष्वपि।
जन्माङ्गादष्टमं क्रूरं लग्नगं सन्त्यजेच्छुभे॥

**नारदः–**

भृगुः षष्ठाह्वयो दोषो लग्नात्षष्ठगते सिते।
उच्चगे शुभसंयुक्ते तल्लग्नं सर्वदा त्यजेत॥

**कश्यपः–**

कुजाष्टमो महादोषो लग्नादष्टमगे कुजे।
शुभत्रययुतं लग्नं त्येत्तुङ्गगतं यदि॥
षडष्टेन्दुर्महादोषो लग्नादष्टमषष्ठगे।
चन्द्रस्योच्चेऽथवा पूर्णे मृत्युकारी समङ्गले॥

—(वृ. दै. र., अ. २९, श्लोक ५२-५४)

**स्वक्षेत्रगः स्वस्य नवांशमो वा शुभग्रहः सौम्यनिरीक्षितो वा।**
**सलग्नगो यत्र निहन्ति दोषान्पञ्चाननो यद्वदिभेन्द्रवृन्दान्॥११७॥**

स्वक्षेत्री, स्वनवांश में स्थित शुभग्रह अथवा शुभग्रहों से देखे जाते हुए वे

लग्न में आ जायें तो दोषों को वैसे ही नष्ट करते हैं, जैसे पञ्चानन देव इन्द्रवृन्द को॥११७॥

लग्न के समस्त दोषों की समाप्ति

**उच्चस्थितः स्वोच्चनवांशगो वा शुभः स्वमित्रेण निरीक्षितो वा।**
**स केन्द्रगो यत्र निहन्ति दोषान्हरिस्मृतिर्यद्वदशेषपापान्॥११८॥**

उच्चस्थ, स्वोच्चनवांश में शुभग्रह अपने मित्र ग्रहों द्वारा देखे जाते हों तथा केन्द्र में हों तो लग्न के समस्त दोषों को वैसे ही दूर करते हैं, जैसे हरिस्मरण से पाप दूर होते हैं॥११८॥

**मूलत्रिकोणर्क्षगतस्तदंश संस्थः शुभो वाप्यथ मित्रदृष्टः।**
**लग्नगो यत्र निहन्ति दोषान्पापं यथा चन्द्रधरे प्रणामः॥११९॥**

मूलत्रिकोण राशि में अथवा उनके नवांश में स्थित शुभग्रह यदि अपने मित्रग्रहों से दृष्ट हों तथा लग्न में हो तो वैसे ही दोषों को विनष्ट करते हैं, जैसे भगवान् शिव को प्रणाम करने से पाप नष्ट हो जाते हैं॥११९॥

वर्गोत्तम में शुभग्रहों का फल

**वर्गोत्तमस्थ-शुभखेचर-सञ्युतं वा।**
**लग्नं च तेन खचरेण निरीक्षितं यत्॥**
**तत्सर्वदोषनिंचयं विनिहन्ति सद्य-**
**स्तार्क्ष्यः समस्तमहिसंघमिव प्रतापात्॥१२०॥**

वर्गोत्तम में स्थित, शुभग्रहों से सञ्युत लग्न शुभग्रहों द्वारा देखा जाता हो तो निश्चय से लग्न के समस्त दोषों को वैसे ही दूर करता है, जैसे गरुड़ जी अपने प्रताप से शीघ्र ही सांपों के समूह को नष्ट कर देते हैं॥१२०॥

**लग्नं स्वनाथशुभमित्रनवांशगं च।**
**तस्याधिमित्र-शुभखेटनवांशगं वा॥**
**तत्तुङ्गसंज्ञितनवांशकगं यदा वा।**
**हन्तीव दोषनिचयं कुलिशं नगौघम्॥१२१॥**

लग्न अपने स्वामी शुभग्रह, मित्रनवांश में हो अथवा अधिमित्र शुभग्रह नवांश में हो, अपने उच्चसंज्ञक नवांशक में हो तो समस्त दोष समूहों को वैसे ही नष्ट करता है, जैसे इन्द्र का वज्र पर्वत समूहों को॥१२१॥

लग्नेश का केन्द्र त्रिकोण में शुभफल

**लग्नेशसौम्यखचरोऽस्तग्रहं विहाय।**
**केन्द्रस्थितो यदि गतोऽखिलदोष वृन्दम्॥**

एकोऽपि हन्त्युपचयोपगतस्त्रिकोण-
संस्थोऽपि यद्वदनिलोऽभ्रचयं समस्तम्॥१२२॥

अस्त ग्रह को छोड़कर लग्न का स्वामी ग्रह केन्द्र में स्थित हो तो समस्त दोष समूह को नष्ट कर देता है। एक भी उपचय स्थान या त्रिकोण स्थान में गया हुआ ग्रह समस्त दोषों को वैसे ही नष्ट करता है, जैसे बादलों को तेज हवा नष्ट करती है॥१२२॥

पापीलग्नेश का शुभफल

पापोऽपिलग्नाधिपतिस्त्रिषष्ठ-
लाभस्थितः स्थानबलाधिकश्च॥
लग्नोत्थदोषान्निखिलान्निहन्ति।
पापानि यद्वत्परमाक्षरज्ञः॥१२३॥

पापी होकर भी लग्नेश तीसरे, षष्ठ एकादश स्थान बल से युक्त हो तो लग्न से उत्पन्न सभी दोषों को वैसे ही नष्ट कर देता है, जैसे प्रणव का ज्ञाता समस्त दोषों को नष्ट कर देता है॥१२३॥

त्यक्त्वास्तकेन्द्रे स्थित सौम्यखेटस्त्रिकोणगो वाप्यथलाभसंस्थः।
दोषानशेषानुदयांशजातान्निहन्ति यद्वत्तिमिरं दिनेशः॥१२४॥

ग्रह अस्तङ्गत न हों, केन्द्र, त्रिकोण एवं लाभस्थान में हों तो लग्न के समस्त दोषों को वैसे ही नष्ट करते हैं, जैसे सूर्यनारायण अन्धकार को॥१२४॥

बलवान शुभग्रहों का फल

बलाधिकाः सौम्यनभश्चरो यः कुटुम्ब संस्थोऽपि निहन्ति दोषान्।
लग्नोद्भवं विष्णुपदाब्जतोयं यथाघसंघं शुभवर्गगोऽपि॥१२५॥

बलवान होकर शुभग्रह धनस्थान में स्थित अथवा शुभवर्ग में गए हुए ग्रह लग्न से उत्पन्न सभी दोषों को वैसे ही नष्ट करते हैं, जैसे भगवान् विष्णु के चरणों से छुआ हुआ जल समस्त पाप समूहों को नष्ट करता है॥१२५॥

सिद्धि-अमृत योगों का फल

यः सिद्धियोगो विनिहन्ति दोषान्पापेक्षितोपग्रहलत्तपातान्।
लग्नेन्दुजामित्रधनप्रचारनीहार-विद्युत्-परिवेषजांश्च॥१२६॥

यह सिद्धियोग दोषों को समाप्त करता है। पाप ग्रहों द्वारा दृष्ट होना, लता एवं पात दोषों को नष्ट कर देता है। लग्न, चन्द्रमा, जामित्र, धन प्रचार, नीहार, विद्युत और परिवेश—॥१२६॥

**दोषानशेषानमृताख्ययोगो निहन्ति लोभो गुणवृन्दमेकः।**
**प्रत्यर्कयोगर्क्षतिथीन्द्र चापकुवार पंगवन्धवांश्च तद्वत्॥१२७॥**

इत्यादि सम्पूर्ण दोषों को अमृत संज्ञक योग वैसे ही नष्ट करता है, जैसे लोभ सभी गुण समूहों को नष्ट कर देता है। प्रत्यर्क योग, नक्षत्र, तिथि, इन्द्रचाप कुवार, पङ्गु, अन्ध इत्यादि योग—॥१२७॥

### सिद्धा तिथि द्वारा दोषों का नाश

**सिद्धा तिथिर्हन्ति समस्तदोषान्यान्मासशून्यानपि मासदग्धान्।**
**दिनप्रदग्धानपि चान्यदोषानेकादशी यद्वदशेष पापान्॥१२८॥**

सिद्धा तिथि मासदग्ध, मासशून्य आदि समस्त दोषों को नष्ट करती है। दिन प्रदग्ध इत्यादि अन्य दोषों को वैसे ही नष्ट करती है, जैसे एकादशी व्रत करने से समस्त पाप नष्ट हो जाते हैं॥१२८॥

### लग्न में बलवान सूर्य-चन्द्रमा का फल

**एकार्गलोपग्रहपातलत्ताजामित्रकर्त्तर्युदयादिदोषाः ।**
**नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषाः॥१२९॥**

एकार्गल दोष, उपग्रह, पात, लत्ता, जामित्र, कर्त्तरी, उदयादि दोषों को लग्न में चन्द्रमा एवं सूर्य बलवान हों तो वैसे ही दोषों को नष्ट करता है, जैसे सूर्योदय होने से रात्रि नष्ट होती है॥१२९॥

### लग्नस्थ बृहस्पति फल

**ये लग्नदोषाः कुनवांशदोषाः पापग्रहैर्दृष्टिनिपातदोषाः।**
**लग्ने गुरुस्तान्विमली करोति फलं यथाम्भः कतकद्रुमस्य॥१३०॥**

जो लग्न दोष, कुनवांश दोष, पापग्रहों का दृष्टि निपात इत्यादि दोषों को लग्न में स्थित बृहस्पति वैसे ही शुद्ध करता है, जैसे जल को रीठा शुद्ध करता है॥१३०॥

क्रमागतः—

नारदः—

दोषा विनाशमायान्ति पापानीव हरिस्मृतेः।
गुरूर्बली त्रिकोणस्थः सर्वदोष विनाशकृत्॥
निहन्ति निखिलं पापं प्रणाममिव शूलिनः।
मुहूर्त्तपाप-षडवर्गकुनवांश-ग्रहोत्थिताः॥
ये दोषास्तान्निहन्त्येव यत्रैकादशगः शशिः।
नाशयत्यखिलान्दोषान्यत्रैकादशगो रविः॥

गङ्गायाः स्नानतो भक्त्या सर्वपापनिवाचिरात्।
वायूपसूर्यनीहारमेघगर्जन सम्भवाः।।
दोषानाशं ययुः सर्वे केन्द्रस्थाने बृहस्पतौ।
ये दोषा मासदग्धास्तिथिलग्न समुद्भवाः।।
ते सर्वे विलयं यान्ति केन्द्रस्थाने बृहस्पतौ।
बलवान केन्द्रगो जीवः परिवेषोत्थ दोषहा।।
—(ना. सं., अ. २९, श्लोक ११०-११५)

**गुणाधिकं दोष विहीनकालं ज्ञात्वा विलग्नेशनवांशपस्य।**
**बलाबलं खेचरिणां सुसम्यग्विचार्य लग्नं प्रवदेदभिज्ञः।।१३१।।**

गुणों से अधिक, दोष हीन समय में जानकर लग्नेश तथा नवांशेशों के स्वामी, ग्रहों का बलाबल भलीभान्ति विचार करके ज्योतिषी विवाहलग्न के सन्दर्भ में कहे।।१३१।।

क्रमागतः–
नारदः–

एकादशस्थः शुक्रो वा बलवाञ्धुभवीक्षितः।
त्रिविधोत्पातजान् दोषान् हन्ति केन्द्रगतो गुरुः।।
स्थानादि बलसम्पूर्णाः पिनाकी त्रिपुरं यथा।
लग्न लग्नांश सम्भूतान बलवान केन्द्रगो गुरु;।।
—(ना. सं., अ. २९, श्लोक ११६-११७)

### विवाह मुहूर्त्त में सूर्य गुरु ताराबल प्राधान्य

**बलेनृनार्योरिनजीवयोश्च तारेन्दुवीर्ये सुदिने सुलग्ने।**
**पञ्चेष्टकेऽर्केन्दुसुरेज्यमुख्ये जामित्रशुद्धौ हिमदीधितेश्च।।१३२।।**

स्त्री एवं पुरुष के विवाह मुहूर्त्त में सूर्य तथा गुरु का बल, चन्द्रतारा बल, शुभदिन, शुभलग्न में पञ्चेष्ट मुहूर्त्त प्राप्त करके, सूर्य-चन्द्रमा एवं गुरु बल प्रधानता के साथ-साथ सप्तम स्थान एवं चन्द्रमा की शुद्धि—।।१३२।।

### सूर्यगुरुपूजा विधान

**यत्रार्कगुर्वोरपि नैधनान्त्यजन्मादिदुस्थानगयोर्द्वयोर्वा।**
**एकस्य पूजामपि तत्र कृत्वा पाणिग्रहं कार्यगतः सुसम्यक्।।१३३।।**

होने पर यदि सूर्य तथा गुरु अष्टम-द्वादश, लग्न में अथवा खराब स्थान में गये हों तो इनमें एक की पूजा करके भलीभान्ति विवाहकार्य सम्पन्न करना चाहिए।।१३३।।

### लग्न में अस्तङ्गत ग्रह का फल

**स्वनीचगाः शत्रुगृहस्थिताश्च तदंशगाश्चास्तमिता ग्रहेन्द्राः।**
**दातुं न शक्ताः स्वफलं विलग्ने दष्टुं भुजङ्गा इव मन्त्रविद्धाः।।१३४।।**

अपनी नीच राशि में स्थित, शत्रु राशि में स्थित, शत्रु के नवांश में, अस्तङ्गत ग्रह लग्न में अपना शुभफल देने में वैसे ही असमर्थ होते हैं, जैसे मन्त्र द्वारा विद्ध सर्प काटने में असमर्थ होता है॥१३४॥

### षड्वर्ग ज्ञान

**लग्नं तदर्द्धं च ततस्त्रिभागो नवांशकश्च द्विरसांशकश्च।**
**त्रिंशांशकश्चेति हि वर्गषट्कं शुभाशुभं व्योम चराधिपत्यम्॥१३५॥**

लग्न और लग्नार्द्ध (होरा) उसका तीसरा भाग (द्रेष्काण) नवांश, द्वादशांश एवं त्रिशांश ये षड्वर्ग आकाश पर चलने वाले ग्रहों के लिए शुभाशुभ कहे गये हैं॥१३५॥

### मङ्गल कार्यों में सूक्ष्मकालज्ञान

**शास्त्रोक्तमार्गेण सुलग्नकालं स्फुटं समानीय जलादियन्त्रैः।**
**संलभ्य तन्मङ्गलसूक्ष्मकालं संवीक्षयेत्तत्र मिथोर्द्धदृष्ट्या॥१३६॥**

शास्त्र द्वारा कहे गये मार्ग से जलादि यन्त्रों से स्पष्ट लग्न काल भलीभान्ति समझ कर मङ्गल कार्यों में मङ्गलसूक्ष्म काल को प्राप्त करके परस्पर तिर्यग् दृष्टि से देखना चाहिए॥१३६॥

### सूक्ष्म लग्नज्ञान के लिए घटी यन्त्रनिर्माण

**अर्द्धोदयं चास्तमिनस्य वीक्ष्य यन्त्रं प्रदद्याज्जलपूर्णपात्रे।**
**अलङ्कृते गन्धसुपुष्पवस्त्रफलाक्षतैर्दैवविदं च पूज्य॥१३७॥**

अर्द्धोदय सूर्य एवं सूर्यास्त को देखकर यन्त्र में जल भर कर पूर्णपात्र को गन्ध, सुन्दर फूलों से, वस्त्र, फल, अक्षत इत्यादि से अलङ्कृत करके ज्योतिषी की पूजा करके—॥१३७॥

**षडंगुलोत्सेधसमं सुवृत्तं कृतं मुखं सद्विरसाङ्गुलं यत्।**
**पलैस्तु शुल्वैर्दशभिर्जलस्य पूर्णं पलैः षष्टिभिरम्बुयन्त्रम्॥१३८॥**

दशपल अर्थात् ४० तोला, छः अङ्गुल ऊँचाई के बराबर कलश बनाकर जिसका मुख बारह अङ्गुल विस्तार (व्यासपूर्ण) वाला हो, जिसमें ६० पल अर्थात् २४० तोला जल परिपूर्ण हो जाए, इस विधि से निर्मित यह पात्र जल में रखने से एक अहोरात्र (२४ घण्टे) में ६० बार डूबे—॥१३८॥

क्रमागतः–

नारदः–

षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम्।
कुर्यात्पालवत्ताम्रपात्रं तद्दशभिः पलैः॥

पूर्णं षष्टिर्जलपलैः षष्टिर्मज्ञति वासरे।।
माषमात्रत्र्यंशयुतं स्वर्णवृत्तशलाकया।
चतुर्भिरङ्गुलैरापस्तथा विद्धं परिस्फुटम्।।
कार्येणाभ्यधिकः षड्भिः पलैस्ताम्रस्य भाजनम्।
द्वादशं मुखविष्कम्भ उत्सेधः षड्भिरङ्गुलैः।।
स्वर्णमासेन वै कृत्वा चतुरङ्गुलात्मकः।
मध्यभागे तथा विद्धा नाडिका घटिका स्मृता।।
—(ना. सं., अ. २९, श्लोक ८६-९०)

**यत्त्र्यंशमाद्यत्रय एव वृत्तां शलाकया मध्यभागविद्धाम्।**
**समुद्रसंख्याङ्गुलदीर्घपात्रे दद्यान्मयूरं नरवानराद्यम्।।१३९।।**

तो पहले तृतीयांश भाग तुल्य शलाका (सलाई) से मध्य भाग में छिद्र करके सात अङ्गुल दीर्घपात्र में पहले मयूर, नर एवं वानर के चित्र बनाकर—।।१३९।।

**क्रमागतः—**

**नारदः—**

ताम्रपात्रे जलैः पूर्णे मृत्पात्रे वाऽथवा शुभे।
गन्धपुष्पाक्षतैः सार्द्धैरलङ्कृत्य प्रयत्नतः।।
तन्दुलस्थे स्वर्णयुते वस्त्रयुग्मेन वेष्टिते।
मण्डलार्द्धोदयं वीक्ष्य रवेस्तत्र विनिःक्षिपेत।।
मन्त्रेणानेन पूर्वोक्त लक्षणं यन्त्रमुत्तमम्।
मुख्यं त्वमसि यन्त्राणां ब्रह्मणानिर्मितं पुरा।।
भावाभवाय दम्पत्योः कालसाधनकारणम्।
द्वादशोङ्गुलकं प्रोक्तमिति शङ्कुप्रमाणकम्।।
—(ना. सं., अ. २९, श्लोक ९१-९४)

**व्यासाङ्गुलत्त्रिगुणमायतमिष्टशंकोर्वृतं तदेव परिधिश्च तदेव तस्य।**
**व्यासाङ्गुलार्द्धदलमङ्गुलमानमिष्टं सर्वत्र शंकुपरिकल्पनमेवमेव।।१४०।।**

शङ्कुयन्त्र से लग्न निर्णय करना—समतल भूमि पर द्वादशाङ्गुल परिमित एक शङ्कु (खूँटी) गाड़ना चाहिए। वहीं पर व्यास की त्रिगुण परिधि आयताकार रूप में निर्मित करनी चाहिए! व्यास का अर्द्धदल एक अङ्गुल होता है और सर्वत्र शङ्कु प्रमाण में वांछित होता है; इसलिए शङ्कु की परिकल्पना हर जगह करनी चाहिए।।१४०।।

**क्रमागतः—**

**केशवार्कः—**

वेदिकां विरचयेद्यथातथं स्यादियं प्रविशतस्तु दक्षिणे।
स्युर्जनाश्रययवोप्तिवर्णिकाः षड्भवत्रिदिवसेषु नाग्रतः।।
—(वि. वृ., अ. १४, ३१ श्लोक )

**तुल्यां समन्ताद् गृहवामभागे हस्तोच्छ्रितायुक्त शुभाययुक्ताम्।**
**समण्डपां प्राक् प्रवणामुदग्वासोपानरम्यां निविडां ककुप्सु॥१४१॥**

घर के वाम भाग में समान रूप में चारों ओर एक हाथ ऊँचा मण्डप शुभ होता है। शुभ मण्डप में वेदी के चारों ओर पूर्व से पश्चिम की ओर अथवा उत्तर की ओर सुन्दर सोपान निर्मित करें॥१४१॥

**क्रमागतः—**
**नारदः—**

हस्तोच्छ्रितां चतुर्हस्तै चतुरस्रां समन्ततः।
स्तम्भैश्चतुर्भिः सुलक्षणैर्वामभागे स्वसद्मतः॥
समण्डपां चतुर्दिक्षु सोपानैरूपशोभिताम्।
प्रागुदक् प्रवणां रम्भास्तम्भहंसशुकादिभिः॥
विचित्रितां चित्रकुंभैश्चित्रितैस्तोरणाङ्कुरैः।
एवं विधां समारोहेन्मिथुनं साग्निवेदिकाम्॥

—(ना. सं., अ. २९, श्लोक ११०-११५)

**विचित्रितामङ्कुरचित्रकुम्भवितानानाविधतोरणाद्यैः।**
**भृङ्गारपुष्पाङ्गणविप्रपीठपुण्याङ्गनानृत्यसुगीतवाद्यैः॥१४२॥**

बहुत रङ्गों वाले अङ्कुरित चित्रित कुम्भ, वितान (चन्दोवा) तथा अनेक प्रकार के तोरण, भृङ्गार पुष्पों से सज्जित विप्र पीठ, श्रेष्ठ स्त्रियों (सौभाग्यवती स्त्रियों) के नृत्य, गीत एवं वाद्यादि द्वारा—॥१४२॥

**ताम्बूलपुष्पाक्षतगन्धवस्त्रमाङ्गल्यसूत्रैः फलपूर्णपात्रैः।**
**धान्याकहारिद्रगुडैः सलाजैर्दीपैरनेकैर्नयनाभिरामाम्॥१४३॥**

ताम्बूल, फूल, अक्षत, सुगन्धित वस्त्र, माङ्गलिकसूत्र, फल एवं पूर्णपात्र, धान्य, हल्दी, गुड़, लाजा (फुल्लियां) नयनों को सुन्दर लगने वाले अनेक प्रकार के दीपों से—॥१४३॥

**क्रमागतः—**
**सप्तर्षिमते विवाहपटले—**

मङ्गलेषु च सर्वेषु मण्डपोगृहमानतः।
कार्यः षोडशहस्तो वा द्विषड्हस्तो दशावधिः॥
स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता।
शोभिता चित्रिता कुंभैरासमन्ताच्चतुर्दिशम्॥

*—(मु. चि. ६ प्र. ९५ श्लोक पी. टी.)*

## त्याज्य वेदी

द्वारविद्धा बली विद्धा कूपवृक्षव्यधा तथा।
न कार्या वेदिका तज्ज्ञैः शुभमंगल कर्मणि॥

—(वृ. दै. र. ७१ अ. श्लोक ११५८)

सवेणुवीणामधुरस्वरेण मनोरमां मङ्गलवेदघोषैः।
प्रदक्षिणप्रक्रमणाद्युपेतां तामारूरोहेन्मिथुनं च वेदीम्॥१४४॥

वंशी, वीणा आदि के मीठे स्वरों से, सुन्दर माङ्गलिक वेद ध्वनियों के द्वारा प्रदक्षिणा क्रम से वर एवं कन्या को वेदी में बैठावें॥१४४॥

लग्नादि द्वादश भावों में सूर्यफल

मृत्युर्नैःस्वं बहुविधधनं भातृहानिः प्रजानाम्।
व्याधिः सौख्यं बहुविधमनो भर्तृहानिश्चिरायुः॥
श्रेयो हानिर्भवति हृदये व्याधिरर्थागमश्च।
भानौ स्त्रीणामतिशयरुजा लग्नभावादि संस्थे॥१४५॥

लग्नादि द्वादश भावों में सूर्य स्थित होने पर स्त्रियों में क्रमशः मृत्यु, निर्धनता, बहुविधधन, भातृ एवं पुत्र की हानि, व्याधि, विभिन्न प्रकार का सुख, स्वामी की हानि, दीर्घायु, श्रेयहानि, हृदय में रोग, धनागम तथा अत्यधिक रोग होता है॥१४५॥

लग्नादि द्वादश भावों में चन्द्रफल

नाशः सम्पद्बहुविधयशो बन्धुवृद्धिः प्रजार्तिः।
शस्त्रान्मृत्युर्भवति न चिराद्दीर्घसापत्न्यबाधा॥
प्रव्रज्यत्वं दुहितृजनितात्वं धनं भोगभाक्त्वम्।
दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे॥१४६॥

लग्नादि द्वादश भावों में चन्द्रमा स्थित होने पर स्त्रियों में क्रमशः सम्पत्ति नाश, बहुविध यशप्राप्ति, भाईयों की वृद्धि, सन्तान कष्ट, शस्त्र से मृत्यु, पत्नी से बाधा, प्रव्रज्या योग, पुत्री की प्राप्ति, धनागम, भोग प्राप्ति तथा स्त्रियों की दासता होती है॥१४६॥

लग्नादि द्वादश भावों में मङ्गलफल

मृत्युः शोको बहुविधधनं भातृवैरं कुबुद्धि-
र्लक्ष्मीप्राप्तिर्भवतिमरणं चोभयोर्वित्तनाशः॥
स्त्रीणां द्वेष्यं व्यसननिरतिः पुत्रपौत्रार्थसिद्धि-
र्भीतिर्भूमेर्बलिनि तनये लग्नभावादि संस्थे॥१४७॥

लग्नादि द्वादश भावों में मङ्गल स्थित होने पर स्त्रियों के लिए क्रमशः मृत्यु, शोक, बहुविधधन, भाई से शत्रुता, कुबुद्धि (खोटी बुद्धि), लक्ष्मी प्राप्ति, मृत्यु, दोनों का धननाश, स्त्रियों से द्वेषे, व्यसन में प्रवृत्ति, पुत्र-पौत्र तथा धन की सिद्धि तथा भय होता है॥१४७॥

### लग्नादि भावों में बुध का फल

प्रीतिर्बुद्धिः सुगुणनिरतिर्बन्धुपूजासुताप्ति-
निर्वैपक्ष्यं तनयरहितत्वं तनुत्यागचिन्ता॥
धर्मे बुद्धिर्भवति धरणीलाभमत्यन्तवृद्धि-
र्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे॥१४८॥

लग्नादि द्वादश भावों में बुध की स्थिति होने पर स्त्रियों के लिए क्रमशः प्रीति, बुद्धि, श्रेष्ठगुण, भाईयों में प्रेम अथवा आसक्ति, पुत्रप्राप्ति, शत्रु से विमुक्त, पुत्ररहित, शरीर त्यागने की चिन्ता, धर्म में बुद्धि, भूमिलाभ, अत्यन्त वृद्धि तथा हानि होती है॥१४८॥

### लग्नादि भावों में बृहस्पति का फल

लक्ष्मीप्रीतिर्भवति सुयशः प्रीतिन्योन्यवृद्धि-
रिष्टावाप्ति बहुविधभयं चाश्रमाणां विरक्तिः॥
पापासक्तिः सुकृतनिरतिर्भूरिलाभः सुरेज्ये।
स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे॥१४९॥

लग्नादि द्वादश भावों में बृहस्पति की स्थिति होने पर स्त्रियों के लिए क्रमशः लक्ष्मी की प्राप्ति, प्रीति, श्रेष्ठयश, परस्पर प्रेम में वृद्धि, इष्ट की प्राप्ति, बहुविधभय, आराम से विरक्ति, पाप में लगाव, पुण्य में लगाव, प्रचुर लाभ, सौख्य तथा शत्रु से भय होता है॥१४९॥

### लग्नादि द्वादश भावों में शुक्र का फल

भोगप्राप्तिर्विविधविभवः स्वैरवृत्तिर्महत्वम्।
पुण्याधिक्यं भवति निधनं सर्वनाशो व्यसुत्वम्॥
पत्युः प्रीतिर्बहुविधगुणः सर्वसम्पत्समृद्धि-
रस्वं स्त्रीणामुशनसि तदा लग्नभावादिसंस्थे॥१५०॥

लग्नादि द्वादश भावों में शुक्र की स्थिति स्त्रियों के लिए क्रमशः भोग प्राप्ति, अनेक प्रकार से धन, शत्रुताभाव, महत्त्व, पुण्य की अधिकता, मृत्यु, प्राणों का सर्वनाश, पति से प्रीति, बहुविधगुणसम्पन्ना, सर्वसम्पत्, समृद्धि तथा गरीबी होती है॥१५०॥

### लग्नादि द्वादश भावों में शनि, राहुकेतु का फल

स्वच्छन्दत्वं कदशनरतिर्वल्लभत्वं विशील्यम्।
व्याधिः सुश्रीर्मृतिरथ सुखंगर्भपातप्रवृत्तिः॥

द्यूतासक्तिर्भवति रविजे वैभवं वक्त्ररोगः।
स्वर्भानौ वा शिखिनि च तथा लग्नभावादिसंस्थे॥१५१॥

लग्नादि द्वादश भावों में शनि, राहु एवं केतु की स्थिति होने पर स्त्रियों में क्रमशः स्वेच्छा से व्यवहार करना, बुरा भोजन, रति में लगाव, शीलरहित, व्याधि, श्रेष्ठलक्ष्मी, मृत्यु अथवा सुख, गर्भपात प्रवृत्ति, जुआ खेलने में असक्ति, धन एवं मुख में रोग होता है॥१५१॥

### लग्नादि द्वादश भावों में विभिन्न ग्रहों का फल

सर्वे जामित्रसंस्था विदधति मरणं सौरिसूर्यौ प्रशस्तौ।
षष्टाष्टत्र्यायसंस्थौ भवरिपुसहजस्थोऽपि भौमः शशाङ्कः॥
लग्नान्त्याष्टारिवर्ज्यः परिणयनविधौ ज्ञाऽन्त्यमृत्युर्विवर्ज्यम्।
शुक्रेज्यौ वा सुतायास्पदनवमगतौ भातृशुक्रोऽपिनेष्टः॥१५२॥

सभी ग्रहलग्न से सप्तम स्थान में स्थित हों तो मृत्युप्रद होते हैं। सूर्य-शनि छठे, आठवें, तीसरे एवं ग्यारहवें भाव में हो तो श्रेष्ठ होते हैं तथा ग्यारह, षष्ठ और तीसरे भावों में चन्द्रमा मङ्गल भी श्रेष्ठ होते हैं। लग्न से द्वादश, अष्टम तथा षष्ठ स्थान छोड़कर विवाह विधि में बुध शुभ परन्तु लग्नान्त में मृत्युप्रद होता है। शुक्र और बृहस्पति कन्या के पञ्चम, नवम अथवा शुक्र तीसरे हो तो नेष्टफल होता है॥१५२॥

### लग्नस्थ शुभाशुभ ग्रहों का फल

लग्नावस्था शुभखचराः कुर्वन्ति विवाहितां सुपुत्रवतीम्।
सप्तभिरब्दैः क्रूराश्चन्द्रश्च विलग्नगो विधवाम्॥१५३॥

लग्न में शुभग्रहों की स्थिति विवाहित स्त्री को पुत्रवती बनाती है। चन्द्रमासहित लग्न में यदि क्रूरग्रहों की स्थिति हो तो सात वर्षों के अन्दर विधवा हो जाती है॥१५३॥

### चन्द्रमासहित द्वितीय भाव में शुभग्रहों का फल

धनसौख्यवतीं सुभगां धनगाः सौम्यग्रहाः सचन्द्राश्च।
क्रूरा द्वितीयसंस्था धनहीनां वत्सरैस्त्रिभिः कन्याम्॥१५४॥

चन्द्रमा सहित दूसरे भाव में शुभग्रह हों तो विवाहित स्त्री को धन, सुख एवं भाग्यशालिनी बनाते हैं॥१५४॥

### चन्द्रमा का तृतीय भाव में शुभाशुभफल

विसिताः सचन्द्रसौम्यास्तृतीयगा वित्तसौख्यवतीम्।
पापास्तृतीयसंस्थाः सततं सौभाग्यपुत्रवतीम्॥१५५॥

शुक्र को छोड़कर चन्द्रमासहित शुभग्रह तृतीय भाव में हों तो विवाहित कन्या

को धन, सुख ऐश्वर्य प्रदान करते हैं। यदि पापग्रह तृतीय भाव में हो तो सदैव सौभाग्यशालिनी एवं पुत्रवती बनाते हैं॥१५५॥

### चन्द्रमा का चतुर्थ स्थान में शुभाशुभफल

**बन्धुस्थाश्चन्द्रयुताः शुभखचरा भर्तृवल्लभां साध्वीम्।**
**अशुभाश्चतुर्थसंस्था दुःशीलां दुर्भगां च कुर्वन्ति॥१५६॥**

चतुर्थ स्थान में चन्द्रमा सहित शुभग्रह हों तो विवाहिता कन्या को साध्वी एवं पति प्रिया बनाते हैं। यदि पापग्रह चतुर्थ में हों तो दुष्टचरित्र वाली और दुर्भाग्यशालिनी बनाते हैं॥१५६॥

### चन्द्रमा का पञ्चमभाव में शुभाशुभफल

**तनयगता सेन्दुशुभा बहुतनयां मानिनीं सुशीलवतीम्।**
**अशुभखगास्तनयगता विपुत्रवतीं वा विवादशीलवतीम्॥157॥**

पञ्चम स्थान में चन्द्रमा सहित शुभग्रह हों तो विवाहिता कन्या को बहुत पुत्रों वाली, माननीया एवं सुशीला बनाते हैं! अशुभ ग्रह पञ्चम भाव में हों तो पुत्र से रहित तथा विवादशीला बनाते हैं॥१५७॥

### षष्ठस्थान में चन्द्रशुक्र का योग

**सप्तभिरब्दैर्विधवां शशिशुक्रौ षष्ठगौ कुरुतः।**
**सततं पापासक्तां ज्ञेयाः पापाः प्रभूतशीलवतीम्॥१५८॥**

चन्द्रमा शुक्र षष्ठ स्थान में हों तो विवाहिता कन्या को सात सालों के अन्दर विधवा तथा सदैव पाप में आसक्त करते हैं। यदि पाप ग्रह षष्ठ में हों तो अधिक शीलवती बनाते हैं॥१५८॥

### सप्तमस्थान में सभी ग्रहों का फल

**सप्तमगाः सकलखगाः सप्तभिरब्दैः ससप्तमासैश्च।**
**दम्पत्योः सहमरणं यमरक्षितमपि च कुर्वन्ति॥१५९॥**

सभी ग्रह सप्तम स्थान में हों तो विवाहिता कन्या के लिये सातमास के अन्दर अथवा सात वर्षों में पति सहित मृत्युप्रद होते हैं, चाहे यमराज स्वयं रक्षा क्यों न करें॥१५९॥

### अष्टम स्थान में चन्द्रमङ्गल का फल

**अष्टमगौ शशिभौमौ धनरहितां तां च पञ्चभिर्वर्षैः।**
**शुभखचराः कापटिकामितरे साध्वीं चिरञ्जीवीम्॥१६०॥**

अष्टम स्थान में चन्द्रमामङ्गल विवाहिता कन्या को पाँच वर्षों के भीतर धन रहित करते हैं। शुभग्रह अष्टम में हों तो कपट करने वाली होती है। यदि पापग्रह अष्टम में हों तो साध्वी एवं चिरंजीवी होती है॥१६०॥

नवमस्थान में चन्द्रसहितशुभाशुभ ग्रहों का फल

**नवमगताः शुभखचराः शशिसहिता भोगभाग्यसौख्यवतीम्।**
**अशुभखगाः खलचित्तां पर निरतां पापवादिनीं चैव॥१६१॥**

नवम स्थान में शुभग्रह चन्द्रमा सहित हों तो विवाहित कन्या को भोग, भाग्य एवं सुखप्रद होते हैं। यदि पापग्रह नवम स्थान में हो तो दुष्टचित्ता, पर पुरुष में आसक्त तथा पापवादिनी होती है॥१६१॥

दशम स्थान में चन्द्रमासहित शुभाशुभग्रहों का फल

**दशमगताः शुभखेटाः शशिसहिता भर्तृपूजितां साध्वीम्।**
**अशुभखगाः प्रतिकूलां मलिनाङ्गीं कर्कशां मृषाभिरताम्॥१६२॥**

दशम स्थान में शुभग्रह चन्द्रमा सहित हों तो विवाहिता कन्या पति द्वारा पूजित तथा साध्वी होती है। यदि अशुभग्रह (पापग्रह) प्रतिकूल, मलिन अङ्गों वाली, कर्कश स्वभाव वाली तथा अस्तभाषिणी बनाते हैं॥१६२॥

एकादश भाव में चन्द्रमासहित शुभाशुभ ग्रहों का फल

**लाभगता निखिलखगा बहुविधधनधान्यपुत्रपौत्रवतीम्।**
**पतिभक्तां शीलवतीं न नीचगास्तारिराशिगाश्च तथा॥१६३॥**

सभी ग्रह एकादश भाव में हों तो विवाहिता कन्या को अनेक प्रकार से धन-धान्य तथा पुत्र-पौत्रादि से युक्त, पति की भक्त एवं शीलयुक्त करते हैं। यदि ग्रह नीचंगत, अस्तंगत और शत्रुराशि में हों तो उक्त फल नहीं होता है॥१६३॥

द्वादश स्थान में शुभाशुभ ग्रहों का फल

**व्ययगो दुग्धाब्धिभवः करोति विधवां च पञ्चभिर्वर्षैः।**
**मानविहीनां सौम्याः पापाः कुर्वन्ति नीचवृत्तवतीम्॥१६४॥**

द्वादश स्थान में शुभाशुभ ग्रह हों तो विवाहिता कन्या को विधवा बनाते हैं, चाहे कन्या क्षीरसागर से क्यों न उत्पन्न हुई हो। शुभग्रह द्वादश में हों तो मान-प्रतिष्ठा रहित यदि पापग्रह द्वादश में हों तो नीच आचरण वाली बनाते हैं॥१६४॥

**सत्खचराः सदसच्च स्थान्स्वशुभफलान्यफलम्।**
**सम्यग्ज्ञात्वाऽथ तयोः शुभफलमधिकं प्रगृह्णीयात्॥१६५॥**

शुभग्रह शुभाशुभ स्थानों में शुभाशुभ फलप्रद होते हैं। अतः शुभाशुभ ग्रहों का फलादेश भलीभान्ति समझ कर कहना चाहिए॥१६५॥

**तत्राधिकफलवृन्दे विनाशमायाति दोषचयम्।**
**यद्वच्छशांककिरणे कलङ्कमखिलं तथैव सदा॥१६६॥**

अधिक फल समूह के कारण समस्त दोष समूह नष्ट हो जाता है, जैसे चन्द्रमा की किरणों से सदैव समस्त कलङ्क मिट जाते हैं।।१६६।।

**देशे च काले च तथा शरीरे राज्येऽपि चापद्यपि यत्र तत्र।**
**भावान्तरं तत्परिकल्पनीयं गान्धर्व वैवाहचतुष्टयार्थम्।।१६७।।**

देश, काल, शरीर तथा राज्य में यहाँ वहाँ विपत्ति होने पर भावनाओं से हट कर गान्धर्वादि चार प्रकार के विवाहों में अन्य फलों की कल्पना करनी चाहिए।।१६७।।

**लग्ने भावाश्चोदितास्तेषु तिष्ठँल्लग्नस्थः संस्तानतीतो द्वितीयः।**
**खेटैस्त्वेवं शेषराशीषु शेषा भावाः सम्यक् कल्पनीयाः क्रमेण।।१६८।।**

अन्य भावों में उदित, उनमें बैठे हुए, लग्न में अथवा द्वितीय भाव में गए हुए ग्रहों के द्वारा शेष राशियों तथा भावों की क्रम से भलीभान्ति परिकल्पना करनी चाहिए।।१६८।।

**ब्राह्मोद्वाहः कायदैवार्षसंज्ञाश्चैते कार्याः प्रोक्तकाले विधेयाः।**
**नूनं गान्धर्वासुरौ राक्षसाख्यः पैशाचो वा सर्वकाले विधेयाः।।1६९।।**

ब्रह्मविवाह, प्राजापत्य, विवाह, दैव, आर्ष इत्यादि विवाहों को पूर्व कहे गए समयानुसार करना चाहिए और निश्चित रूप से गान्धर्व, आसुर, राक्षस तथा पैशाच संज्ञक विवाह सभी कालों में करने चाहिए।।१६९।।

### ब्रह्मविवाह प्रशंसा

**ब्राह्मो विवाहस्तज्जातः पुरूषानेकविंशतिम्।**
**आहूय दीयते शक्त्या पुनात्युभयतः स्थितान्।।170।।**

ब्रह्म विवाह से उत्पन्न हुआ बालक अपनी इक्कीस पीढ़ियों को पवित्र करता है। इस विवाह में वर को अपने घर में आमन्त्रित करके यथाशक्ति पूजा विधान करके कन्या को दिया जाता है।।१७०।।

### प्राजापत्य विवाह प्रशंसा

**कायोद्वाहः पावयेत्षट् षड्वंश्यांस्तत्र सम्भवः।**
**चरतामनया धर्ममित्युक्त्वा दीयतेऽर्थिने।।१७१।।**

प्राजापत्य विवाह से उत्पन्न बालक बारह पीढ़ियों को पवित्र करता है। कन्या की इच्छा करने वाले वर का यथासम्भव पूजा करके तुम इस कन्या के साथ धर्म का आचरण करना ऐसा कहकर कन्या दी जाती है।।१७१।।

**क्रमागतः–**

**नारदः–**

उक्त काले तु कर्त्तव्याश्चत्वारः फलदायकाः।
आसुरो द्रविणादानात्पैशाचः कन्यका छलात्।।

राक्षसो युद्धहरणद् गन्धर्वः समयान्मिथः।
गान्धर्वासुरपैशाचराक्षसाख्यास्तु नोत्तमाः।।
—(ना. सं., अ. २७, श्लोक १४४-१४५)

### दैवविवाह

**दैवोद्वाहो यज्ञवते ऋत्विजे दीयते सदा।**
**पुनात्युभयतः सप्त पुरुषांश्चैव तत्रजः।।१७२।।**

दैव विवाह में यज्ञ करवाने वाले ऋत्वज को अपनी कन्या दी जाती है। इस विवाह से उत्पन्न सन्तान दोनों ओर से सात-सात पीढ़ियों को पवित्र करती है।।१७२।।

### आर्षविवाह

**आर्षोद्वाहस्तथाऽऽदाय गोद्वयं दीयते सुता।**
**पुनात्युभयतस्त्रीन्स्त्रीन्पुरुषांस्तत्र सम्भवः।।१७३।।**

आर्ष विवाह में वर को घर में आमन्त्रित करके उससे दो गाय लेकर कन्यादान में दी जाती है। इस विवाह द्वारा उत्पन्न सन्तान दोनों ओर तीन-तीन पीढ़ियों को पवित्र करती है।।१७३।।

**क्रमागतः–**

**श्रीपतिः—**

प्रजापत्यं ब्राह्मदैवर्षिसंज्ञाः कालेषूक्तेष्वेव कार्या विवाहाः।
गान्धर्वाख्यश्चासुरो राक्षसश्च पैशाचो वा सर्वकालेविधेयाः।
चत्वारो ब्राह्मणस्याद्या राज्ञां गान्धर्वराक्षसौ।
राक्षसश्चासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः।।
ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता।
यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम्।।
आसुरो द्रविणादानाद् गन्धर्वः समयान्मिथः।
राक्षसो युद्धहरणात्पैशाचः कन्यका छलात्।।
—(वृ. दै. र. प्र. ७१, श्लोक १६)

### गान्धर्व, आसुर, राक्षस विवाह इत्यादि

**गान्धर्वः समयग्राह्य आसुरोऽर्थप्रदानतः।**
**राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात्।।१७४।।**

गान्धर्व विवाह समय ग्राह्य अर्थात् समयानुसार वर-कन्या का एक-दूसरे से प्रेम करना, धन प्रदान करके असुरसंज्ञक विवाह, युद्ध एवं अपहरण द्वारा राक्षस विवाह तथा छलपूर्वक (धोखा देकर) कन्या से विवाह पैशाच संज्ञक कहा जाता है।।१७४।।

**अष्टादश कूटज्ञान**

**वर्णा दिनं गणमहेन्द्रवधूविदूरयोन्याख्यराशितदधीशविवश्यनाड्यः।**
**वेधाख्यभूतबहुलिङ्ग विजातिगोत्रपक्ष्यापयोगिनि सुधांशुयुजो दशाष्टौ॥१७५॥**

वर्ण, दिन, गण, महेन्द्र, स्त्रीदूर, योनि, राशि, राश्याधिपति, वश्य, नाड़ी, वेध, बहुलिङ्ग, विजाति, गोत्र पक्षी, योगिनी, सुधांशु और युंजा ये अष्टादश कूट कहे हैं॥१७५॥

**क्रमागतः–**

**वर्णो वश्यं नृदूरं च वल्लभत्वं च तारका।**
**योनिर्मित्रगणे राशिनाडि केति क्रमाद्दश॥**

—(ज्यो. नि., १४१ पृ., श्लोक ७)

**तत्र दूरद्वयं हित्वा कूटं भेदाष्टकं भवेत्।**
**तारादि षट्कं षडभेदं परं योनि चतुष्टयम्॥**

—(ज्यो. नि., १४१ पृ., श्लोक ७)

**नोट :** आठ कूट विचार में ३६ गुण होते हैं; क्योंकि वर्णादिको एकोत्तर वृद्धि होने के सन्दर्भ में १-८ तक गणना का सरल उपाय "लीलावती" में बताया है—"**सैकपदघ्नपदार्धं**" से—

(१) $\frac{(८+१) \times ८^{४}}{२} = (८+१)\,४ = ९ \times ४ = ३६$

(२) नवकूट में $\frac{(९+१) \times ९}{२} = \frac{१०^{५} \times ९}{२} = ५ \times ९ = ४५$

(३) दस कूटों में $\frac{१० + १ \times १०^{५}}{२} = (१० + १) \times ५ = ११ \times ५ = ५५$

(४) अष्टादशकूटों में $\frac{१८ + १ \times १८^{९}}{२} = (१८ + १) \times ९ = १९ \times ९ = १७१$

इस प्रकार भिन्न-भिन्न कूटों में भिन्न-भिन्न गुणसंख्या प्राप्त होती है।

**नवर्क्षपर्यायवशाद्वधूभमाद्यं वरर्क्षान्तमथो विगणय्य।**
**जन्मत्रिभं पञ्चमसप्तमं भं त्यक्त्वान्यभं शोभनमामनन्ति॥१७६॥**

कन्या के जन्म नक्षत्र से वर के नक्षत्र पर्यन्त गिने तथा वर के नक्षत्र से कन्या के नक्षत्र तक गिने! नौ के पर्याय से तीन भागों में करें, तीसरा, पाँचवां और सातवां नक्षत्र त्याग दें। अन्य सभी नक्षत्र शुभ कहे गये हैं॥१७६॥

### देवगण, मनुष्यगणसंज्ञकनक्षत्र

**दस्त्रादितीज्यमृगमैत्रकरानिलान्त्य लक्ष्मीशभानि नव देवगणः प्रदिष्टः।**
**पूर्वात्रयान्तक विधातृहरोत्तराणि धिष्ण्यानि मानुष गणोऽत्र नव प्रदिष्टः॥१७७॥**

अश्विनी, पुनर्वसु, पुष्य, मृगशिरा, अनुराधा, हस्त, स्वाती, रेवती तथा श्रवण ये नौ देवगण संज्ञक हैं। पूर्वाफाल्गुनी, पूर्वाषाढ़ा, पूर्वाभाद्रपदा, भरणी, रोहिणी, आर्द्रा, उ. फा. उ. षा. उ. भा. ये नौ मनुष्यगण संज्ञक कहे गये हैं॥१७७॥

**क्रमागतः-**

**नारदः-**

दम्पत्योर्जन्मभे चैकगणे, प्रीतिरनेकधा।
मध्यमा देवमर्त्यानां राक्षसानां तयोमृतिः॥

—(मु. चि. ६, प्र. ३० श्लोक पी.टी.)

**कश्यपः-**

स्वगणे चोत्तमा प्रीतिर्मध्यमाऽमरमर्त्ययोः।
मर्त्यराक्षसयोर्वैरममरासुरयोरपि ॥

*—(मु. चि. ६, प्र. ३० श्लोक पी.टी.)*

लल्लः

सम्बन्धो निजयोनौ नृपमित्रकलत्र पूर्वशस्तः।
वध्यां नरामराणां मध्यमां नररक्षसां किञ्चित्॥

—(वृहद् दैवज्ञरञ्जन श्लोक संख्या ३३५ अ० ७१)

### असुरसंज्ञकनक्षत्र तथा गणों का परस्पर स्नेह एवं वैर

**पितृद्विदैवाग्निशतेन्द्रमूलवस्वाहिचित्रर्क्षगणोऽसुराख्यः।**
**देवासुराणां मनुजासुराणां वैरं महास्नेहमथेतरेषाम्॥१७८॥**

मघा, विशाखा, कृत्तिका, शतभिषा, ज्येष्ठा, मूल, धनिष्ठा, आश्लेषा, चित्रा ये नौ नक्षत्रों को असुर संज्ञक कहा है। देवता और राक्षस में, मनुष्य और राक्षस में वैर है तथा अन्य सभी में परस्पर बहुत स्नेह होता है॥१७८॥

### महेन्द्रवर्ग कथनम्

**स्त्रीधिष्ण्यतो वेद ४ दिगा १० दि १ विश्वा १३।**
**नृपा १६ तिधृत्या १८ कृति २२ तत्व २५ तुल्ये॥**
**पुंभे सति प्रीतिरतीव शश्वन्महेन्द्रवर्गश्च वधूवरस्य॥१७९॥**

स्त्री (वधू) के नक्षत्र से वर का नक्षत्र, चतुर्थ, दशम, प्रथम, त्रयोदश, षोडश, अष्टादश, बाईस, पच्चीस हो तो वर एवं वधू में अत्यन्त प्रीति होती है। इसे महेन्द्र वर्ग कहा है॥१७९॥

### स्त्रीकूट ज्ञान

**स्त्रीधिष्ण्यतो भे नवके वरस्य चाद्ये तयोर्वैरमथ द्वितीये।**
**सामान्यमेतच्च वधूविदूषितं तस्मात्तृतीये नवके विवाहः॥१८०॥**

स्त्री (वधू) के नक्षत्र से वर का नक्षत्र प्रथम गणना में नवमां हो तो परस्पर वैर होता है। दूसरी वार नवमां नक्षत्र हो तो सामान्य सम्बन्ध समझें। इसलिये तीसरी गणना में नवमां नक्षत्र आ जाये तो विवाह शुभ होता है। इसे स्त्रीकूट कहते हैं॥१८०॥

### नक्षत्रानुसार चौदह प्रकार की योनियां

**अश्वेभमेषभुजगद्वयकुक्करौ तु मेषौ तु मूषकमथोंदुरूगोलुलायाः।**
**शार्दूलमाहिषगवारिमृगद्वयाश्वशाखामृगोक्षकपि पञ्चमुखाश्च सिंहाः॥१८१॥**
**गोकुञ्जराविति यथाक्रममाश्विनादिभानां भवन्ति खलु कल्पितयोनिरूपाः।**
**एतद्विचार्यमखिलं सदसद् ग्रहज्ञस्त्रिस्कन्धवित्प्रवरधीर्विबुधां वरिष्ठः॥१८२॥**

अश्विनी शतभिषा की अश्व योनि, स्वाति हस्त नक्षत्रों की महिष, ज्येष्ठा पूर्वाभाद्रपदा की सिंह, भरणी रेवती की हाथी, पुष्य कृत्तिका को बकरा, श्रवण, पूर्वाषाढ़ा की वानर, उ.षा., अभिजित् की नकुल, मृगशिरा रोहिणी की सर्प, ज्येष्ठा अनुराधा की मृग, मूला आर्द्रा की श्वान्, पुनर्वसु आश्लेषा की विडाल, मघा पू. फा. की मूषक, विशाखा चित्रा की व्याघ्र, उ. फा. उ. भा. की गौ योनि होती है॥१८१॥

गाय, हाथी यथाक्रम से अश्विन्यादि नक्षत्रों में कल्पित योनि रूप कहे गये हैं। इन सभी का अच्छा-बुरा विचार करके त्रिस्कन्ध ज्योतिष के ज्ञाता श्रेष्ठ बुद्धि वाले ज्योतिषी को विचार करना चाहिए।

चौदह योनियों में प्रत्येक पाद की दो योनियों में परस्पर महावैर है, जो विवाह में वर्जित है। उदाहरण के लिये पूर्वार्द्ध अश्विनी शतभिषा की अश्व योनिक, प्रथमपाद के उत्तरार्द्ध में स्वाति हस्त की महिष योनि से महावैर है॥१८२॥

### योनिवैर विचार

**बभ्रुरगं श्वैणमिभेंद्र सिंहमोत्वाखुसंज्ञं त्वजवानरं च।**
**गोव्याघ्रमश्वोत्तममाहिषं च वैरं नृनार्योर्नृपभृत्ययोश्च॥१८३॥**

नेवला और साँप का, कुत्ता और मृग का, हाथी और शेर का, बिल्ली और मूषक का, बकरे वानर का, गाय बाघ का, अश्व महिष का वैर होता है। वर एवं कन्या के राजा और नौकर के योनिवैर का विचार करना चाहिए॥१८३॥

### षडाष्टक, नवपञ्चम, द्विर्द्वादश विचार

**षडाष्टके मृत्युरथाङ्गनाया राशौ नृनार्योर्नवपञ्चमेऽपि।**
**अपत्यहानिर्नियतं च नैःस्वं द्विर्द्वादशे प्रीतिरतः परेषाम्॥१८४॥**

षडाष्टक दोष अर्थात् वर एवं कन्या की छठी एवं आठवीं राशि आ जाये तो कन्या की मृत्यु होती है। वर एवं कन्या की राशियां परस्पर नवमें पाँचवें हों तो सन्तान होनि होती है। राशियां दूसरे बारहवें में हों तो गरीबी होती है। इसके अतिरिक्त अन्य सभी में प्रीति होती है॥१८४॥

राशिकूट ज्ञान

**कनिष्ठं राशिकूटं यदेतच्च त्रिविधं स्मृतम्।**
**व्यत्ययान्मध्यमं चैतदपरं मध्यमं सदा॥१८५॥**

राशिकूट कनिष्ठ है। इसे भी तीन प्रकर का कहा है। एक-दूसरे से परिवर्तन होने पर मध्यम तथा इससे अतिरिक्त सदैव मध्यम ही होता है॥१८५॥

एकाऽधिपत्य, राशीश मित्रता का शुभफल

**एकाऽधिपत्ये त्वथ मित्रभावे स्त्रीपुंसराश्योर्नव रज्जुदोषे।**
**षट्काष्टकादिष्वापि शर्मदं स्यादुद्वाहकर्माचरतोस्तयोश्च॥१८६॥**

एकाऽधिपत्य योग, परस्पर राशि मित्रता होने पर स्त्री-पुरुष राशियों में रज्जुदोष एवं षडाष्टक दोष आने पर भी सुखोपलब्धि कही है। अतः इन योगों में वरकन्या का विवाह करना चाहिए॥१८६॥

क्रमागतः-

ज्योतिर्निबन्धे—

एकराशौ महाप्रीतिश्चतुर्थदशमे सुखम्।
तृतीयैकादशे वित्तंसुप्रजा समसप्तके॥

ज्योतिषतत्त्वे—

एकराशौ च दम्पत्योः शुभंस्यात्समसप्तके।
चतुर्थेदशमे चैव तृतीयैकादशे तथा॥
षडाष्टके मृतिर्ज्ञेया पंचमेत्वनपत्यता।
नैस्वं द्विर्द्वादशेन्येषु दम्पत्योः प्रीतिरुत्तमा॥

—(वृ. द. र. अ. ७१, श्लोक ३४७, ३५०)

एकाऽधिपत्य, राशीश, मित्रता विवाह का शुभफल

एकाऽधिपत्य, राशीश मित्रता विवाह का शुभफल

**एकाधिये मित्रभावेऽप्युद्वाहः शर्मदः सदा।**
**द्विर्द्वादशे त्रिकोणे च न कदाचित्षडषृके॥१८७॥**

एकाऽधिपत्ययोग, परस्पर राशीश मित्रतायोग विवाह में सदैव शुभफलप्रद कहे हैं, ऐसे योगों में द्विर्द्वादश, नवपञ्चम एवं षडाष्टक होने पर भी विवाह सुख देने वाला होता है॥१८७॥

**क्रमागतः-**

**जगन्मोहने—**

मित्रषट्काष्टकं कीटमेषयोर्वृषजूकयोः।
कर्किचापभयोर्मीनसिंहयोर्मृगयुग्मयोः।।
कन्यकाकुभ्योरन्यत्प्रयत्नादिह वर्जयेत्।।

—(मु. चि. ६ प्र. ३२, श्लोक, पी. टी.)

**चण्डेश्वरः-**

**अशुभनवपञ्चम-**

मेषे च चापे मकरे वृषे च कुम्भे च युग्मे झषकर्कटे च।
कुम्भे तुलायां झषकीटयोश्च शत्रुत्रिकोणे बहुःदुःखहानिः।।

**शुभनवपञ्चम्—**

मेषे च सिंहे वृषभे च कन्ये युग्मेघटे वृश्चिककर्कटे च।
सिंहे च चापे मकरे युवत्या मित्रत्रिकोणं बहुपुत्रलाभः।।

*—(वृ. दै. र. अ. ७१, श्लोक ३७०-७१)*

**अन्योऽन्यशात्रवे त्याज्यस्त्याज्यः षट्काष्टकेऽपि च।**
**नाड़ीदोषे भवेन्मृत्युर्गुणैः सर्वैः समन्वितः।।१८८।।**

राशियों पर शत्रु हों तो षडाष्टक का त्याग करना चाहिए। सभी गुणों से युक्त होने पर भी नाड़ी दोष मृत्युप्रद होता है।।१८८।।

**क्रमागतः-**

**चण्डेश्वर : अशुभद्विद्वादशम्—**

कन्याहरौ कीटतुलाधरौ वा चापे मृगे वा झषगे च कुम्भे।
कुलीर युग्मे वृषभे च मेषे द्विर्द्वादशे वै निधनं करोति।।

**शुभद्विर्द्वादाशम्-**

चापे फणीन्द्रे घटभे मृगे च अजेजले सिंहकुलीरके च।
कन्या तुलायां वृषभेषु युग्मे द्विर्द्वादशे चाथ करोति वृद्धिम्।।

—(वृ. दै. र. अ. ७१, श्लोक ३७४-७५)

**भकूटपरिहारक्रमागतः-**

**अत्रिः-**

राशीशयोः सुहृद्भावे मित्रत्वे चांशनाथयोः
गणादिदौष्ट्येप्युद्वाहः पुत्र-पौत्र प्रवर्द्धनम्।
"राशिमैत्रे शुभेलब्धे ग्रहमैत्री न चिन्तयेत्"

*—(मु. चि. ६ प्र. ३३-श्लोक पी. टी.)*

**मध्यनाड़ी पतिं हन्ति पार्श्वे नाड्यौ तु कन्यकाम्।**
**तस्मान्नाडी सदा त्याज्या दम्पत्योः शुभमिच्छता।।१८९।।**

मध्य नाड़ी दोष पति के लिए मृत्युकारक, अन्त्य नाड़ी कन्या के लिए मृत्युप्रद है। अतः दम्पति के लिये कल्याण की इच्छा से नाड़ी दोष सदैव त्याज्य है॥१८९॥

**क्रमागतः–**
**गर्गः—**

नाडीकूटं तु संग्राह्यं कुटानां तु शिरोमणिम्।
ब्रह्मणा कन्यकाकण्ठसूत्रत्वेन विनिर्मितम्॥

—(मु. चि. ६ प्र. ३४, श्लोक, पी. टी.)

**राशिकूट ज्ञान**

**उत्तमे राशिकूटेऽपि समं शात्रवमेव वा।**
**विवाहः शुभदो ज्ञेयो नापि मध्यकनिष्ठयोः॥१९०॥**

उत्तम राशि कूट होने पर विवाह शुभ, सम राशिकूट से मध्यम तथा शत्रु होने पर अधम होता है॥१९०॥

**स्त्रीदूरे समजामित्रे सहजाय सुहृद्दशे।**
**शत्रुः समः समो मित्रं मित्रं चेत्परमं सुहृत्॥१९१॥**

स्त्रीदूर समसप्तक (१,७) सहजाय (३,११) सुहृददश (४-१०) पर शुभ, शत्रु सम-सम तथा मित्र-मित्र होने से परममित्र हो जाता है॥१९१॥

**नृयुक्तुलामेषघटाश्विसिंहाः कुर्वन्त्यजस्रं खलु मित्रभावम्।**
**स्वषष्ठसंख्याभवनैश्च तेऽपि स्वस्वाष्टसंख्याभवनैकता वा॥192॥**

मिथुन, तुला, मेष, कुंभ, धनु, सिंह ये राशियां सदैव मित्रता भाव रखती हैं। अपने षष्ठ संख्या वाले भाव में रहकर अपनी आठवीं संख्या के घर में एकता रखती हैं॥१९२॥

**अन्योऽन्यं शात्रवं यत्र दम्पत्योर्जन्मतस्तयोः।**
**प्रीतिषष्टाष्टमं त्याज्यमपि नूनं करग्रहे॥१९३॥**

अन्योऽन्य जो राशियां शत्रुभाव रखती हैं। यदि वही राशियां दम्पति की जन्म राशियां हों तथा मित्र षडाष्टक योग का भी विवाह में त्याग करना चाहिए॥१९३॥

**एकराशिपृथक्धिष्ण्येऽप्युत्तमं पाणिपीडनम्।**
**एकधिष्ण्ये पृथग्राशौ सर्वैक्येऽपि च मृत्युदम्॥194॥**

एक राशि पृथक् नक्षत्र विवाह में उत्तम कहे हैं। इसी प्रकार यदि नक्षत्र एक हो तथा राशि भिन्न हो तो भी विवाह शुभफलप्रद होता है। परन्तु सभी कुछ एक हो तो विवाह मृत्यप्रद होता है॥१९४॥

क्रमागतः-

नारदः-

एकराशौ पृथक् धिष्ण्ये दम्पत्योः पाणिपीडनम्।
उत्तमं मध्यमं भिन्नराश्यैकर्क्षगयोस्तयोः।।

—(मु. चि. ६ प्र. ३६, श्लोक, पी. टी.)

गर्गः—

एक राशौ द्विनक्षत्रे पुंतारा प्रथमाभवेत्।
अतीव शोभनः प्रोक्तः स्त्रीतारा चेद्विनश्यति।।

—(वृ. दै. र. अ. ७१, श्लोक ४१८ ज्यो नि. १४३, पृ. ७ श्लोक)

**जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम्।**
**व्यत्ययेन यदा योज्यं दम्पत्योर्निधनप्रदम्।।१९५।।**

जन्म के नक्षत्र से जन्म का नक्षत्र, नाम के नक्षत्र से नाम का नक्षत्र ही वरवधू मेलापक में युक्ति संगत है। यदि विपरीत क्रम से अर्थात् एक का जन्म नक्षत्र दूसरे का नाम नक्षत्र जोड़ने से दोनों वरवधू के लिये मृत्युप्रद होता है।।१९५।।

क्रमागतः-

बृहद्दैवज्ञरञ्जने—

कुर्यात्षोडशकर्माणि जन्मराशौ बलान्विते।
सर्वाण्यन्यानि कार्याणि नामराशौ बलान्विते।।
ज्ञातं जन्म यदा पुंसः स्त्रियो न ज्ञायते तदा।
जन्मनाम्नोर्बलं ज्ञात्वा कुर्वीतोद्वाहमङ्गलम्।।

—(बृहद् दैवज्ञरञ्जने पृ. सं. २४६)

**अज्ञातजन्मनां नृणां नामभं परिकल्पयेत्।**
**तेनैव चिन्तयेत्सर्वं राशिकूटादि पूर्ववत्।।१९६।।**

अज्ञात जन्मराशि वालों का नामराशि से जन्म राशि की भाँति समस्त राशिकूटादि पहले की तरह परिकल्पना करनी चाहिए।।१९६।।

**रवेः समोज्ञः सितसूर्यपुत्रावरी परेऽन्ये सुहृदोऽम्बराठाः।**
**चन्द्रस्य नारि रविचन्द्रपुत्रौ मित्रे समाः शेषनभश्चराः स्युः।।१९७।।**

सूर्य का बुध सम, शुक्र एवं शनि शत्रु तथा अन्य सभी ग्रह मित्र हैं। चन्द्रमा का कोई भी शत्रु नहीं, सूर्य बुध मित्र तथा शेष सभी ग्रह सम हैं।।१९७।।

**समौ सितार्की शशिजश्च शत्रुर्मित्राणि शेषा पृथिवीसुतस्य।**
**शत्रुःशशी सूर्यसितौ च मित्रे समाः परे स्युः शशिनन्दनस्य।।198।।**

पृथ्वी पुत्र मङ्गल के शुक्र शनि सम, बुध शत्रु तथा शेष सभी ग्रह मित्र हैं! चन्द्रमा के पुत्र बुध का चन्द्रमा शत्रु, सूर्यशुक्र मित्र तथा अन्य सभी ग्रह सम हैं।।१९८।।

**गुरोर्ज्ञशुक्रौ रिपुसंज्ञकौ तु शनिः समोऽन्ये सुहृदो भवन्ति।**
**शुक्रस्य मित्रे बुध सूर्यपुत्रौ समौ कुजेज्यावितरावरी तौ॥१९९॥**

देवगुरु बृहस्पति के बुध शुक्र शत्रु, शनि सम तथा अन्य सभी ग्रह मित्र हैं। दैत्यगुरु शुक्र के बुध शनि मित्र, मङ्गल बृहस्पति सम अन्य सभी ग्रह शत्रु हैं॥१९९॥

**शनेः सम वाक्पतिरिन्दुसूनुशुक्रौ च मित्रे रिपवः परेऽपि।**
**ध्रुवं ग्रहाणां चतुराननोऽपि शत्रुत्व मित्रत्व समत्वमुक्तम्॥२०॥**

शनि के बृहस्पति सम, बुध शुक्र मित्र तथा अन्य सभी ग्रह शत्रु हैं! ग्रहों की ध्रुव मित्रता, शत्रुता एवं समता के सन्दर्भ में स्वयं ब्रह्मा जी ने कहा है—अर्थात् इस अटल ग्रह मैत्री को ब्रह्मा जी ने अपने संहिता ग्रन्थ में भी लिखा है; यह प्रमाणित होता है॥२०॥

### अथवश्यकूटम्

**वश्यास्त्यक्त्वा राशयोऽन्ये नराणां।**
**सिंहं तस्याप्येकमन्ये विधेयाः॥**
**कीटं त्यक्त्वा लोकतोऽन्यत्प्रसिद्धं।**
**वश्यावश्यं नैव तोयालयाञ्च॥२०१॥**

सिंह राशि को छोड़कर पुरुष राशि के वश में अन्य सभी राशियां, वृश्चिक राशि को छोड़कर सभी राशियां सिंह राशि के अधीन होती हैं, जलचर राशियां वृश्चिक राशि के वशीभूत नहीं होतीं अतः वरकन्या के परस्पर सम्बन्धों का ज्ञान लोकप्रसिद्ध रीति से करना चाहिए॥२०१॥

**आवृत्तिभिर्भैस्त्रिभिरश्विभाद्यं क्रमोत्क्रमात्सङ्गणयेच्च भानि।**
**यद्येकपर्वण्युभयोश्च धिष्ण्ये नेष्टा नृनायोर्भृशमेकनाडी॥२०२॥**

अश्विन्यादि सत्ताईस नक्षत्रों की क्रम से तीन आवृत्तियां करके क्रम-उतक्रम गणना करने पर यदि वर कन्या के नक्षत्र एक ही पर्व में आ रहे हों तो एक नाड़ी हो जाने से दोनों के लिए नेष्ट होते हैं॥२०२॥

**क्रमागतः—**

**वराहः—**

आद्यैकनाडी कुरूते वियोगं मध्याख्यनाड्यामुभयोर्विनाशनम्।
अन्त्ये च वैधव्यमतीवदुःखं तस्माच्च तिस्रः परिवर्जनीयाः॥

—(मु. चि. ६ प्र. ३४, श्लोक, पी. टी.)

एकनाडि वियोगश्च गुणैः सर्वैः समन्वितः।
वर्जनीयः प्रयत्नेन दम्पत्योर्निधनप्रदः॥

—(मु. चि. ६ प्र. ३४, श्लोक, पी. टी.)

**सा मध्यनाडी पुरुषं निहन्ति तत्पार्श्वनाडी खलुकन्यकां च।**
**आसन्नपर्यायसमागता चेद्वर्षेण साप्यन्तरिता त्रिवर्षैः॥२०३॥**

मध्य नाड़ी पुरुष को मारती है तथा पार्श्व (अन्त्य) नाड़ी कन्या को मारती है, ऐसा निश्चित समझें। आदि नाड़ी दोष में विवाह होने पर निश्चित ही एक से तीन वर्षों के अन्तर में वर एवं कन्यां की मृत्यु हो जाती है॥२०३॥

**क्रमागतः—**
**रत्नकोशे—**

**वैश्वानरद्रुहिणयोरदितीशयोश्च तद्वत्करार्यमभयोद्व्यधियानिर्लेंदौ।**
**छागैकपाद्वरूणयोः श्रुतिवैश्वयोश्च स्याच्चेदभिन्नभवने नहि नाड़ी दोषः॥**

—(वृ. दै. र. अ. ७१, श्लोक ६२८)

**केचिन्नैच्छन्ति चैकांशे केचिदिच्छन्ति मेलकम्।**
**तत्राप्यघ्रे घटीसाम्यं त्यजेन्नो भिन्ननाडिकम्॥**

*(ज्यो.नि. १४४ पृ. २४ श्लोक)*

**केशवार्क—**

**पराशरः प्राह नवांश भेदादेकर्क्षराश्योरपि सौमनस्यम्।**
**एकांशकत्वेपि वसिष्ठ शिष्योनैकत्र पिण्डे किल नाडिवेधः॥**

—(वि. वृ. ३ अ. २४ श्लोक)

**विवाहकुतुहले—**

**शुक्रे जीवे तथा सौम्ये एकराशीश्वरो यदि।**
**नाड़ी दोषो न वक्तव्यः सर्वथा यत्नतो बुधैः॥**

—(वृ. दै. र. अ. ७१, श्लोक ४४४)

**अथवेधकूटम्**

**पूर्वाश्विन्योर्याम्यमैत्राख्ययोश्च वह्नीन्द्राग्न्योर्वायुतोयेशयोश्च।**
**विश्वेंद्वोर्वै त्वाष्ट्रजाङ्घ्न्योर्हुताश विष्णवोर्विश्वादित्ययोर्जीववाय्वोः॥२०४॥**

रेवती, अश्विनी, भरणी, अनुराधा, विशाखा, कृत्तिका, स्वाती, शतभिषा, मृग्शिरा, उत्तराषाढ़ा, चित्रापूर्वाभाद्रपदा, आर्द्रा श्रवण, उ.षा.हस्त, पुण्य स्वाति—॥२०४॥

**क्रमागतः—**
**विवाह वृन्दावने—**

**याम्योत्तरा प्रागपराश्च पञ्च द्वे द्वे च रेखे रचयेद्विदिक्षु।**
**विदिग्द्वतीयार्गलितागिनतारः सहाभिजित्तत्रभवद्वेवर्गाः॥**

—(अ. १, श्लोक ६)

**क्रमागतः-**

मूलादित्योः श्रवणमघयोः सौम्यविश्वाद्वयोश्च।
पौष्णर्यम्णोर्वरुणमरुतोर्मैत्रयाभ्यर्क्षयोश्च।।
अहिर्बुध्न्याभिधरविभयो रोहिणी साभिजिच्च।
वेधोयं वै मुनिभिरूदितः पाणिसम्बन्धकाले।।

—(वृ. दै. र. अ. ७१, श्लोक ७३६)

**स्पष्टार्थ पञ्चशलाका चक्र**




**मुहूर्त्त चिन्तामणौ रामः**

वेधोन्योन्यसमौ विरिंच्यभिजितोर्याम्यानुराधार्क्षयो-
र्विश्वेंदोर्हरिपित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः।
स्वातीवारुणयोर्भवेन्निर्ऋति भादित्योस्तथा फान्त्योः
खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः।।

—(प्र. ६, श्लोक २६)

**ग्रन्थान्तर से वेधित नक्षत्र**

रोहिणी, अभिजित्—भरणी-अनुराधा, उ.षा.-मृगशिरा, श्रवण-मघा, हस्त, उ.भा., स्वाती-शतभिषा, मूल-पुनर्वसु उ. फा. रेवती नक्षत्रों का परस्पर ग्रहकृत वेध होता है। जैसे भरणी नक्षत्र पर कोई ग्रह हो तो उसका अनुराधा पर और अनुराधास्थ ग्रह का भरणी पर वेध होता है। समग्र ग्रह वेध की अपेक्षा ग्रह जिस नक्षत्र के चरण

पर हो अर्थात् चौथे चरण में होने पर प्रथम चरण वेधित और दूसरे चरण में हो तो तीसरे चरण पर वेध होता है।

**मूलाश्लेषातारयोः पौष्णपित्रोर्भाग्यर्क्षाहिर्बुध्न्ययोर्वै विवाहे।**
**तोयेशाहिर्बुध्न्ययोराजपादर्यम्णोर्वैरं सर्वदा वर्जनीयम्।।२०५।।**

मूल, आश्लेषा, रेवती, मघा, पू. फा. उ. भा. शतभिषा, उ. भा. पू. भा. उ. फा. नक्षत्रों में परस्पर वेध होता है। अतः विवाहकाल में सदैव वर्जित हैं।।२०५।।

**क्रमागतः–**

**श्रीपति—**

"वधूप्रवेशने दाने वरणे पाणिपीडने।
वेधः पञ्चशलाकाख्योऽन्यत्र सप्तशलाककः।।"

अथगण्डान्त भूतकूटम्

**दस्त्रर्क्षतो भानि भवन्ति पञ्चगणा धराम्ब्वग्न्यनिलाम्बराणाम्।**
**पञ्चर्तुभूतर्त्विषुभिः क्रमेण वैरं जलाग्न्योरितरत्र वृद्धिः।।२०६।।**

अश्विनी नक्षत्र से रेवती नक्षत्र तक पाँच-पाँच गण क्रमशः पृथ्वी, जल, अग्नि, वायु और आकाश संज्ञक होते हैं। इन पाँचों में जल एवं अग्नि का वैर होता है। अन्य सभी में वृद्धि होती है।।२०६।।

**सर्पाच्चतुष्कं वसुवारिरुद्रत्वाष्ट्रत्रयं विश्वयमान्त्यशक्राः।**
**स्त्रीलिङ्गताराः श्रवणेन्दुमूलतारा नपुंसाः पुरुषाः परेस्युः।।२०७।।**

आश्लेषा, मघा, पू. फा., उ. फा., धनिष्ठा, पू. षा, आर्द्रा, चित्रा, स्वाती, विशाखा, उ. षा., भरणी, रेवती तथा ज्येष्ठा ये चौदह नक्षत्रों का लिङ्ग-स्त्री है, जबकि श्रवण, मृगशिरा एवं मूल नक्षत्र नपुंसक तथा अन्य पुरुष संज्ञक हैं।।२०७।।

| स्त्रीलिङ्ग | | नपुंसक | पुरुष | |
|---|---|---|---|---|
| आश्लेषा | चित्रा | श्रवण | अश्विनी | हस्त |
| मघा | स्वाति | मृगशिरा | कृत्तिका | अनुराधा |
| पू. फा. | विशाखा | मूल | रोहिणी | |
| उ. फा. | उ. षा. | | शतभिषा | |
| धनिष्ठा | भरणी | ० | पूर्वाभाद्रपदा | |
| पूर्वाषाढ़ा | रेवती | ० | पुर्नर्वसु | उत्तराभाद्रपदा |
| आर्द्रा | ज्येष्ठा | ० | पुष्य | |

**स्वकीयलिङ्गेषु तयोः स्वजन्मधिष्ण्येषुसम्प्रीतिरतीव नित्यम्।**
**युद्धं भवेद्व्युत्क्रमलिङ्गकेषु सामान्यमन्यत्र नपुंसकेषु।।२०८।।**

अपने ही लिङ्ग में वरवधू का जन्म नक्षत्र आये तो निरन्तर परस्पर अत्यधिक प्रीति होती है। यदि वर-कन्या का विपरीत लिङ्ग नक्षत्र हों तो परस्पर युद्धकारक समझें। यदि नपुंसक लिङ्ग नक्षत्र हों तो सामान्य फल होता है॥२०८॥

**विप्रक्षमाधीश्वरविट् चतुर्था ये पञ्चमाः संकरजाश्च षष्ठाः।**
**जातिप्रभेदा इति दस्त्रभादिऋक्षाण्यपि ब्राह्मणपूर्वकाणि॥२०९॥**

ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, पाँचवें वर्णशङ्कर, षष्ठ अन्यजाति—ये जातिभेद अश्विन्यादि नक्षत्रों में ब्राह्मण-क्षत्रिय क्रम से होते हैं॥२०९॥

**क्रमादजांघ्रित्रितयं च शिष्टं त्रैवर्णिकानां निखिलानि भानि।**
**सम्यग्विचार्यैवमनुक्रमेण जात्याख्यकूटे च फलं ब्रवीमि॥210॥**

क्रमशः तीन ही जातियों में उत्पन्न वर-कन्या के सभी नक्षत्र शुभ कहे हैं। अतः भलीभाँति विचार करके क्रम से जातिकूट का फल कहता हूँ॥२१०॥

**प्रीतिर्नृनार्योरतुलैक्य जात्यां पुंजातितो हीनकुला समा स्त्री।**
**स्त्रीजातितो हीनकुलः पुमांश्चेद्विलोमजात्यामपि तीव्रवैरम्॥211॥**

वर-वधू में एक जाति हो तो परस्पर उत्तम प्रीति होती है। पुरुष जाति से हीन कुल वाली स्त्री सम, स्त्री जाति हीन होने से श्रेष्ठ; परन्तु विपरीत जाति में तीव्र वैर होता है॥२११॥

**स्युः सप्तगोत्रा भचतुष्टयेन गजाश्विसंख्याऽश्विमुखानिभानि।**
**मरीचिवासिष्ठमहांगिरोऽत्रिपौलस्तिसंज्ञाः पुलहः क्रतुश्च॥212॥**

अश्विन्यादि अभिजित् सहित अट्ठाईस नक्षत्रों के चार-चार भाग से सप्त गोत्र क्रमशः मरीचि ऋषि, वसिष्ठ, महाअङ्गिरा, अत्रि, पौलस्ति, पुलह तथा क्रतु संज्ञक हैं॥२१२॥

**ऋषि नक्षत्र ज्ञानचक्र**

| ऋषि | मरीचि | वसिष्ठ | अङ्गिरा | अत्रि | पौलस्ति | पुलह | क्रतु |
|---|---|---|---|---|---|---|---|
| | अश्विनी | मृगशिरा | आश्लेषा | हस्त | अनुराधा | उ.षा. | शतभिषा |
| नक्षत्र | भरणी | आर्द्रा | मघा | चित्रा | ज्येष्ठा | अभिजित् | पू.भ |
| | कृत्तिका | पुनर्वसु | पू.फा. | स्वाति | मूला | श्रवण | उ.भा. |
| | रोहिणी | पुण्य | उ.फा. | विशाखा | पूर्वाषाढ़ा | धनिष्ठा | रेवती |

**यदैक गोत्रे कलहस्त्वजस्त्रं सम्प्रीतिवृद्धिर्यदि भिन्नगोत्रे।**
**एषु प्रधानः खलु गोत्रवर्गः संचिन्तनीयः सततं नृनार्योः॥२१३॥**

यदि एक ही गोत्र में वरवधू विवाह हो तो सदैव कलह होती है। भिन्न गोत्र में विवाह परस्पर प्रीति में वृद्धि कारक होता है! यह गोत्रवर्ग निश्चय से प्रधान है। अतः वर-कन्या के विवाह में इसका सदैव विचार करना चाहिए।।२१३।।

**क्रमागतः-**

**समानप्रवरो भिन्नो मातृगोत्रवरस्य च।**
**विवाहो नैव कर्त्तव्यः सा कन्या भगिनी भवेत्।।**

—(ज्यो. नि. १३२ पृ., ४ श्लोक )

**अष्टादशगोत्र प्रवर्त्तकाः—**

जामदग्न्यो वीतहव्यो वैन्यो गृतसमदाह्वयः।
व्याघ्रः श्रीगौतमाख्यश्च भारद्वाजाह्वयः कपिः।।
हारितो मौद्गलः कण्वो विरूपो विष्णुरुद्धयः।
अत्रिविश्वामित्र कौंचौ वसिष्ठः कश्यपाह्वयः।।
अगस्त्यश्चेति मुनयोष्टादशगणाः स्मृताः।।

—(ज्यो. नि. १३३ पृ., ८-९ श्लोक )

### पक्षिकूटम्

**भेरुण्डपिङ्गलककाकसुकुक्कुटानां बर्हि तथाश्विमुखभानि गुणांश्च पञ्च।**
**बाणर्तुषट्शरशरैः क्रमशो विवाहे भिन्ने गणे कलहमेकगणे प्रवृद्धिः।।२१४।।**

भेरुण्ड, पिङ्गल, काक, मुर्गा तथा मोर ये अश्विन्यादि पाँच गण कहे जाते हैं, पाँच, छः छः पाँच पाँच ये क्रम से विवाह में शुभफलप्रद होते हैं। यदि भिन्न गण हो तो कलहप्रद; परन्तु एक गण हो तो वृद्धिकारक होता है।।२१४।।

### अथायकूटम्

**आया ध्वजाद्याः क्रमशोऽशिवपूर्वभान्यष्टभिर्भैश्च पुनः पुनः स्युः।**
**त्रैवर्णिकं भत्रितयं च शिष्टं प्रद्वेषमेषां खलु पञ्चमेन।।२१५।।**

क्रम से अश्विन्यादि नक्षत्रों को तीन आवृत्तियों में आठ से भाग देकर ध्वजादि आया का विचार करना चाहिए। इनमें तीन आवृत्तियों में तीसरा नक्षत्र शुभ होता है; परन्तु पाँचवां नक्षत्र आपस में शत्रुता करता है।।२१५।।

### अथयोगिनीकूटम्

**ब्रह्माणी कौमारी वाराही वैष्णवी च माहेन्द्री।**
**चामुण्डा माहेशी श्रीक्ष्मीश्चाष्टयोगिन्यः।।२१६।।**

ब्राह्मणी, कौमारी, वाराही, वैष्णवी, माहेन्द्री, चामुण्डा, माहेशी तथा श्रीलक्ष्मी ये आठ योगिनियां कही हैं।।२१६।।

**पूर्ववदूर्द्धं सर्वं योगिन्यैक्ये शुभोऽन्यथात्वशुभः।**
**वर्गो मुख्यतरः स्यात्सर्वेषां सर्वदा करग्रहणे॥२१७॥**

पीछे जैसे कहा—सभी योगिनियों की एकता होने से शुभ होता है अन्यथा अशुभ हो जाता है। वर्ग का विचार सभी के लिये मुख्य है। विवाह में इसका विचार सदैव करना चाहिए॥२१७॥

**पावकदुर्गादिवसौ रविरमरयतिश्च सुरपदिशि।**
**धर्मचतुर्मुखदिवसौ भूतनयः पावकश्च वह्नि दिशि॥२१८॥**

प्रतिपदा एवं नवमी तिथियों में योगिनी पूर्व दिशा में होती है। पूर्व दिशा के स्वामी सूर्य तथा देवता इन्द्र हैं। दशमी एवं द्वितीया तिथियों में योगिनी अग्निकोण में होती है इसका स्वामी मङ्गल तथा देवता अग्नि है॥२१८॥

**योगिनी दिशावास, स्वामी एवं देवता ज्ञानचक्र**

| तिथियां | वास दिशा | स्वामी | देवता |
|---|---|---|---|
| प्रतिपदा नवमी | पूर्व | सूर्य | इन्द्र |
| द्वितीय दशमी | अग्नि | मङ्गल | अग्नि |
| तृतीया एकादशी | दक्षिण | बृहस्पति | यमराज |
| चतुर्थी द्वादशी | नैर्ऋत्य | शनि | नैर्ऋत्य |
| पञ्चमी त्रयोदशी | पश्चिम | शुक्र | वरुण |
| षष्ठी चतुर्दशी | वायव्य | चन्द्रमा | वायु |
| सप्तमी पूर्णिमा | उत्तर | शनि | कुबेर |
| अष्टमी अमावस | ईशान | राहु | शिव |

**गिरिसुताविश्वेदिवसौ वा सुरगुरुः प्रेतयश्च याम्यायाम्।**
**गणपति हरि दिवसौ दिशि रवितनयः कोणयश्च नैर्ऋत्याम्॥219॥**

तृतीया एवं एकादशी को योगिनी दक्षिण दिशा में होती है। इस दिशा के स्वामी बृहस्पति एवं देवता यमराज होते हैं। चतुर्थी एवं द्वादशी को योगिनी नैर्ऋत्य दिशा में होती है। इसके स्वामी शनि एवं देवता नैर्ऋत्य हैं॥२१९॥

**क्रमागतः–**

**आचार्य लल्लः—**

प्रतिपन्नवमी पूर्वे द्वितीया दश चोत्तरे।
तृतीयैकादशौ वह्नौ चतुर्द्वादशी नैर्ऋते॥
पंचत्रयोदशी याम्ये षष्ठी भूतश्च पश्चिमे।
सप्तमी पूर्ण वायव्ये अमावस्याष्टमी शिवे॥

—(वृ. दै. र. अ. ८५, श्लोक ५३-५४)

**स्पष्टार्थ-चक्र**

| पूर्व | अग्नि | दक्षिण | नैर्ऋत्य | पश्चिम | वायव्य | उत्तर | ईशान | दिशा |
|---|---|---|---|---|---|---|---|---|
| १,९ | ३,११ | ५,१३ | ४,१२ | ६,१४ | १,१५ | २,१० | ८,३० | तिथि |

**कामभुजङ्गमदिवसौ असरगुरुर्वारिपश्च वारुण्याम्।**
**शिवगिरिजात्मजदिवसौ प्रभञ्जनः शीतरुक्च वायव्याम्॥220॥**

त्रयोदशी एवं पञ्चमी को योगिनी पश्चिम में होती है। इसके स्वामी शुक्र एवं देवता वरुण हैं।

चतुर्दशी एवं षष्ठी तिथियों को योगिनी वायव्यदिशा में होती है। इसके स्वामी चन्द्रमा और देवता वायु है॥२२०॥

**क्रमागतः–**

**मुहूर्त्तचिन्तामणौ—**

नवभूम्यः शिववह्नयोऽक्षविश्वेऽर्ककृताः शक्ररसास्तुरङ्गतिथ्यः।
द्विदिशोऽमावसवश्च पूर्वतः स्युस्तिथयः सम्मुखवामगा न शस्ता॥

—(मु. चि. म., यात्रा प्रकरण, श्लोक-३४ )

**स्पष्टार्थ-चक्र**

| पूर्व | अग्नि | दक्षिण | नैर्ऋत्य | पश्चिम | वायव्य | उत्तर | ईशान | दिशा |
|---|---|---|---|---|---|---|---|---|
| १,९ | ३,११ | ५,१३ | ४,१२ | ६,१४ | ७,१५ | २,१० | ८,३० | तिथि |

**दिनपति निशिपतिदिवसौ दिनपसुतो यक्षराड्डुदीच्यां च।**
**वसुपितृदिवसौ नूनं स्वर्भानुरथ चन्द्रमौलिरैशान्याम्॥२२१॥**

सप्तमी एवं पूर्णिमा तिथि को योगिनी वास उत्तर दिशा में होता है। इसके स्वामी शनि एवं देवता कुबेर हैं। अष्टमी एवं अमावस में योगिनी ईशान दिशा में होती है। इसके स्वामी राहु एवं देवता शिव हैं॥२२१॥

क्रमागतः-

मुहूर्तचिन्तामणि प्रो. रामचन्द्र पाण्डेय जी द्वारा कृत चन्द्रिका टीका 'विमर्श' में—

योगिनी जानने के लिए सुगम विधि भड्डरी में मिलती है। ''पू, उ, अ, न, द, प, वा, ई'' फिर योगिनी पूरब आई।

| | | |
|---|---|---|
| पू (पूर्व) | प्रतिपद | नवमी |
| उ (उत्तर) | द्वितीया | दशमी |
| अ (अग्नि) | तृतीया | एकादशी |
| न (नैर्ऋत्य) | चतुर्थी | द्वादशी |
| द (दक्षिण) | पञ्चमी | त्रयोदशी |
| प (पश्चिम) | षष्ठी | चतुर्दशी |
| वा (वायव्य) | सप्तमी | पूर्णिमा |
| ई (ईशान) | अष्टमी | अमावस्या |

ज्योतिष चन्द्रिकाकार का मत भी दिया है।

**योगिनी सुखदा वामे पृष्ठे वाञ्छितदायिनी।**
**दक्षिणे धनहन्त्री च सम्मुखे मरणप्रदा।।**

**अश्विन्याद्यास्ताराः पर्याय परैरष्टभिश्च विज्ञात्वा।।**
**दम्पत्योर्दिगधीशग्रहनाथानां तिथीशानाम्।।२२२।।**

अश्विन्यादि नक्षत्रों का आठ पर्यायों से ज्ञान करके वर-वधू के दिशाओं के स्वामी ग्रहों एवं तिथियों के स्वामियों से मेलापक करना चाहिए।।२२२।।

**मित्रत्वे मित्रत्वं शत्रुत्वे शात्रवं च वैवाहे।**
**ज्ञातव्याश्चाष्टादश वर्गाः सम्यक् सदैव विदा।।२२३।।**

वर-वधू में राशीश मित्रता होने पर मित्रताभाव, राशीश शत्रुता होने पर शत्रुता भाव रहता है। अतः विद्वानों को मेलापक में अष्टादश वर्गों का भलीभाँति विचार करना चाहिए।।२२३।।

**मुख्योऽप्रजानां ग्रहमित्रवर्गः क्षमाधिपानां ग्रहसंज्ञकं च।**
**विशां प्रधानं वनिता विदूरं योन्याख्यवर्गं सततं परेषाम्।।२२४।।**

ग्रहों के मित्रवर्ग का विचार ब्राह्मणों के लिए, क्षत्रियों के लिए ग्रहसंज्ञक विचार, स्त्रीदूर का विचार वैश्यों के लिए प्रधान है तथा योनि विचार अन्य वर्गों के लिए करना चाहिए।।२२४।।

**राशिकूट तदधीशमैत्रता स्त्रीविदूर गणयोनिनाडिकाः।**
**दैवयोगवरगोत्रसमेताः पाणि पीडन विधौ परिचिन्त्याः॥२२५॥**

राशिकूट, राशीशमैत्री, स्त्रीदूर, गण, योनि, नाड़ी, दैवयोग, वर का गोत्र इत्यादि विवाह समय में परिचिन्तनीय है॥२२५॥

**मध्यं दिनगते भानौ मुहूर्त्तोऽभिजिदाह्वयः।**
**योऽष्टमः सर्वदोषघ्नस्त्वन्धकारं यथा रविः॥२२६॥**

सूर्य मध्याह्न काल के मुहूर्त्त को अभिजित् मुहूर्त्त कहा है, जो दिवा मुहूर्त्तों में अष्टम मुहूर्त्त होता है। यह मुहूर्त्त सभी दोषों को वैसे ही नष्ट करता है, जैसे भगवान् सूर्य अन्धकार को दूर करते हैं। (प्रतिदिन भारतीय स्टै. टा. के अनुसार दिन के ११:३६ से १२:२४ तक यह मुहूर्त्त होता है। इस मुहूर्त्त में सभी शुभकार्य किये जा सकते हैं)॥२२६॥

**क्रमागतः-**
**नारदः-**

अष्टमो योऽभिजित्संज्ञः स एव कुतपः स्मृतः।
तस्मिन्काले शुभायात्रा विना याम्यां बुधैः स्मृताः॥

—(वृ. दै. र. पृ. ३१२ ज्यो. नि. ४६, पृ. १० श्लोक)

यात्रानृपाभिषेकावुद्वाहोऽन्यच्च माङ्गल्यम्।
सर्वे शभुदं ज्ञेयं कृतं मुहूर्त्तेऽभिजत्संज्ञे॥

—(ज्यो. नि. ४६ पृ. ११-श्लोक)

विष्टिव्यतीपातकृतान् दोषानुत्पातखचर भवान्।
मध्याह्नकृतो दिनकृत्सर्वानपनीय शुभकृत्स्या॥

—(वृ. दै. र. पृ. ३१२ ज्यो. नि. ४६, पृ. १२ श्लोक)

पौराणिक रौद्रसिता मैत्रवार भवाः क्षणाः।
सावित्र वैराजिकाख्यौ गन्धर्वाश्चाष्टमोऽभिजित्॥

—(ना. सं. अ. ९, श्लोक ६)

**सूर्याच्चतुर्थं यल्लग्नमभिजित्संज्ञकं तु तत्।**
**सर्वदोषं निहन्त्याशु पिनाकी त्रिपुरं यथा॥२२७॥**

सूर्योदय से जो चतुर्थ लग्न होता है, उसे अभिजित् संज्ञक कहा है। यह अभिजित् मुहूर्त्त शीघ्र ही सभी दोषों को वैसे ही दूर करता है, जैसे भगवान् शङ्कर ने त्रिपुर राक्षस को मारा था॥२२७॥

**क्रमागतः-**
**कश्यपः-**

पौराणिका रौद्रसिता मैत्राश्चाऽऽरभयक्षणाः।
सावित्रो वैराजकाख्यो गन्धर्वश्चाष्टमोऽभिजित्॥

जर-वराधिपात्, ज२-वराधिपार (—धराधिपान्)

३९. (अ) ज१-कुर्यादमुत: (—कुर्यादुदङ्मुख:)

(ब) ज१-शौच, ज२-शैवं (—शौचं)

४०. (अ) ज१,२-साधन्यकापाठितेन च (—सत्वगापाटितेन च)

४१. (अ) ज१-शिरीखलोध्रयतम्, ज२-शिलोखलोध्रयतन (—शिरीषलोध्रपनसं)

मु. पु. कदम्बकै: (—कन्दबकै:)

(ब) ज१-कुटजाकोटकुटैर्लक्ष्मी, ज२-कुटजाकोटक्दुलै: लक्ष्मी (—कुटजांकोलबकुलैर्लक्ष्मी)

४३. (अ) ज१,२-वदर्यो (—खदिरो)

४४. (अ) ज१-काश्वतय, ज२-काश्वत्य (—कांबष्ठ)

(ब) ज१,२-सारसारंमतुंडुलैर्विपुलं (—शालनारङ्गनिचुलैरतुलं)

४६. (अ) ज१,२-तिंत्रीणां (—तन्त्रणीक)

ज१-समीवोयु, ज२-समीवायु (—शमीवेणु)

४७. (अ) ज१-कांविष्टगगेतदोर्ग्जलपातसै:, ज२-कोविष्टगकेतजोर्जलपातसै: (—हरीतकी विष्ठिनाकेतकोद्दालतापसै:)

(ब) ज१-कर्णासाज, ज२-कर्णासावमि (—कार्पासाटकि)

४८. (अ) ज१,२-भल्लातकी (—भल्लातको)

ज१-देवदरूमक्ष्येतज बालकै:, ज२-देवदारुमर्क्षेतिजत्रबालकै: (—देवदरूर्मदयन्तीक्षु वालकै:)

४९. (अ) ज१-श्रुणुवरीकथा, ज२-शुंडंबरीकथा (—शृण्वन्हरिकथा)

ज१-लापात्सव्यादित्रियमं, ज२-लापात्सव्यादीत्रियमं (—लापान्सन्ध्यादि नियमं)

ज१,२-दूर्वाचदानवीयातुमृत्तिका मु. पु. दूर्वेभदानतीर्थाम्बुमृत्तिका: (—दूर्वेभदाकतीर्थाम्बु मृत्तिका:)

५०. (अ) ज१,२-धारहत्वासहोमाज्य (—धारयित्वा सहेमाज्यावेक्षणं)

५१. (अ) ज१-उच्चाति, ज२-उद्धनिभ्य (—लब्ध्वातेभ्य:)

(ब) ज१-कुर्याद्वेवीसीविषवा, ज२-कुर्याद्ववीसिविषजां (—कुर्याद्वचांसि भिषजां)

५२. (अ) ज१,२-काव्यदोमंत्रनैयायिकै: (—काव्यज्ञैर्मन्त्रिनैयायिकै:)

५३. (अ) ज१,२-राज्याभिवृद्धौ (—राज्याभिवृद्धि)

(ब) ज१,२-कर्मकृत्वा (—कृव्यंकृत्वा), ज१,२-ग्रासन (—ग्रसन)

५४. (अ) ज१-पुत्रोष्व:, ज२-पुत्रोच्च: (—पुत्राद्यै:)

ज१-भुजात (—भुञ्जीत)

ज१-शुरात्तार्याहरीतयो:, ज२-श्रणुताया: हरीतयो (—शृण्वन्गाथां हरेशयो:)

(ब) ज१, २-गवादिश्चशिक्षयेत् (—गजाश्वादींश्च वीक्षयेत्)

५५. (अ) ज१,२-सार्पशलाध्यादिक (—सायंसन्ध्यादिकं)

५७. (अ) ज१,२-विचित्रिकैः (—विचित्रितैः)

५८. (ब) ज१,२-गुप्तवाचकान् (—गुप्तचारकान्)

६०. (अ) ज१,२-साकीर्तिम् (—सत्कीर्तिम्)

पुष्पिका: ज१-इति श्रीवृद्धवासिष्ठ ब्रह्मर्षि विरचितायां महासंहितायां राजाभिषेक स्वरूपलक्षणं नाम त्रयत्रिंशतमोध्यायः॥३३॥

पुष्पिका: ज२-इति श्रीवृद्धवासिष्ठ ब्रह्मर्षि विरचितायां महासंहितायां राजाभिषेक स्वरूपलक्षणं नाम त्रयत्रिंशतमोध्यायः॥३३॥

***

# ३४

# अश्वारिष्टशान्त्याध्यायः

### अश्वशान्ति

**भूयतेर्यस्य सन्त्यश्वाः स एव विजयी रणे।**
**श्रीमान्स एव तस्माद् हि कार्यमश्वाभिरक्षणम्।।१।।**

जिस राजा के पास घोड़े होते हैं, वही राजा युद्ध में विजयी एवं श्रीमान् होता है। इसलिए घोड़ों की रक्षा के उपाय कहते हैं।।१।।

**क्रमागतः–**

**नारदः–**

अश्वशान्तिं प्रवक्ष्यामि तेषां दोषापनुत्तये।
भानुवारे च संक्रान्तावयने विषुवद्वये।।

—(ना. सं.-अश्वशान्ति अध्याय, १ श्लोक)

**वृहद्दैवज्ञरञ्जने—**

भूपतेर्यस्य सन्त्यश्वाः स राजा विजयी रणे।
श्रीमान्स एव तत्तस्मात्कार्यमश्वाभिरक्षणम्।।
सूर्ये स्वात्यर्क्ष संपाते जायन्ते बहवो रूजः।
यदा यदा रोगजनमश्वनामथवा तदा।।
सलोकपालं रेवन्तं पूजाहोमं च कारयेत्।।

—(अ० ८२. ६५-६६ श्लोक)

**सूर्ये स्वात्यर्क्षसञ्याते जायन्ते बहवो गदाः।**
**यदा यदा रोगजननमश्वानामथवा तदा।।२।।**
**सलोकपाल हेरम्बपूजां होमं च कारयेत्।**
**भानुवारे च सङ्क्रान्तावयने विषुवद्द्वयोः।।३।।**

सूर्य के स्वाति नक्षत्र में आने पर बहुत से रोगों की उत्पत्ति होती है, जब घोड़ों में रोग आ जाये तो उस समय मङ्गलवार, संक्रान्ति दिवस, उत्तरायण-दक्षिणायन में तथा दोनों विषुव संक्रान्तियों में लोकपालों सहित श्रीगणेश की पूजा तथा होम इत्यादि करना चाहिए।।२-३।।

**क्रमागतः–**

**नारदः–**

दिनक्षये व्यतीपाते द्वादश्यामश्विभेऽपि वा।
अथवा भास्करे स्वाती संयुक्ते च विशेषतः।।

ईशान्यां त्वष्टभिर्हस्तैश्चतुर्भिर्वाथ मण्डपम्।
चतुर्द्वारवितानस्त्रक्तोरणाद्यैरलंकृतम् ॥
—(ना. सं.-अश्वशान्ति अध्याय २-३ श्लोक)

**क्रमागतः–**

**वृहद्दैवज्ञरञ्जने—**

भानुवारे च संक्रान्तावयने विषुवद्वये॥
दिनक्षये व्यतीपाते द्वादश्यामश्विभेपि वा॥
ऐशान्यामष्टभिर्हस्तैश्चतुर्भिर्वाथ मंडपम्॥
चतुर्द्वारं वितानस्त्रक्तोरणाद्यैरलंकृतम्॥
तन्मध्ये वेदिका तस्य पञ्चविंशतिमांशतः॥
मण्डपस्य बहि कुण्डं प्राच्यां पूर्वोक्तलक्षणम्।
वरयेत्पूर्वद्विप्रान्स्वस्ति वाचनपूर्वकम्॥
सूर्य पुत्र हयारूढं पञ्चवक्त्रंदशांबकम्।
रक्तवर्णांकुशाखड्गं रेवन्तं द्विभुजं स्मरेत॥
—(ना. सं.-अश्वशान्ति अध्याय ८२, ६७-७१ श्लोक)

**दिनक्षये व्यतीपाते द्वादश्यामश्वभेऽपि वा।**
**ऐशान्यामष्टर्भिहस्तैश्चतुर्भिर्वाथ मण्डपम्॥४॥**

दिनक्षय (तिथिक्षय) होने पर, व्यतीपात योग में, द्वादशी तिथि अथवा अश्विनी नक्षत्र में, ईशानकोण में चार अथवा आठ हाथ चौड़ा मण्डप निर्माण करें॥४॥

**चतुर्द्वारवितानस्त्रक्तोरणाद्यैरलङ्कृतम्।**
**तन्मध्ये वेदिकान्तस्य पञ्चविंशतिमानतः॥५॥**

वेदिका से २५ हाथ की दूरी पर चारों तरफ द्वार वाले मण्डप का निर्माण करें तथा माला और तोरण से उसे सुसज्जित करें॥५॥

**क्रमागतः–**

**नारदः–**

तन्मध्ये वेदिकातस्य पञ्चविंशांशमानतः।
मण्डपस्य वहिः कुण्डं प्राच्यां हस्तप्रमाणतः॥
वरयेच्छ्रोत्रियान् विप्रान् स्वस्ति वाचनपूर्वकम्।
सूर्यपुत्रं हयारूढं पञ्चवक्त्रं त्रियम्बकम्॥
—(ना. सं.-अश्वशान्त्याध्याय ४-५ श्लोक)

**मण्डपस्य बहिः कुण्डं प्राच्यां पूर्वोक्तलक्षणम्।**
**वरयेत्पूर्ववद्विप्रान्स्वस्तिवाचनपूर्वकम् ॥६॥**

मण्डप के बाहर पूर्व दिशा में पूर्वोक्त लक्षणों के अनुसार कुण्ड का निर्माण करें। अनन्तर स्वस्ति वाचनपूर्वक ब्राह्मणों का वरण करें।।६।।

**सूर्यपुत्रं हयारूढं पञ्चवक्त्रं दशाम्बकम्।**
**रक्तवर्णं कशाखड्गं रेवन्तं द्विभुजं स्मरेत्।।७।।**

सूर्यपुत्र घोड़े पर आरूढ़, पाँच मुख वाले, दश नेत्रों वाले, लालवर्णयुक्त, चाबुक, खड्ग तथा दो भुजाओं वाले रेवन्त का स्मरण करें।।७।।

**क्रमागतः-**

**नारदः-**

शुक्लवर्ण वसा खड्गं रैवन्तं द्विभुजं स्मरेत्।
सूर्य पुत्र नमस्तेऽस्तु नमस्ते पञ्च वक्त्रक।।
नमोगन्धर्वदेवाय रैवन्ताय नमो नमः।
मन्त्रेणानेन रैवन्तं वस्त्रगन्धाक्षतादिभिः।।
विधिवद्वेदिका मध्ये तण्डुलोपरि पूजयेत्।
कार्यास्तत्र गणाः पञ्चरौद्रशाक्राश्च वैष्णवाः।।

—(ना. सं.-अश्वशान्ति अध्याय ६-८ श्लोक)

**नमस्कार पूजनमन्त्र**

**सूर्यपुत्र नमस्तेऽस्तु नमस्ते पञ्चवक्त्रक।**
**नमो गन्धर्वदेवाय रेवन्ताय नमो नमः।।८।।**

सूर्यपुत्र (शनि) आपको प्रणाम! पाँच मुख वाले को प्रणाम! गन्धर्व देव के लिये नमस्कार तथा रेवन्त पूषा देवता के लिये बार-बार नमस्कार है।।८।।

**पूजा प्रकार**

**मन्त्रेणानेन रेवन्तं गन्धवस्त्राक्षतादिभिः।**
**विधिवद्वेदिकामध्ये तण्डुलोपरि पूजयेत्।।९।।**

इस मन्त्र के द्वारा रेवन्तं (पूषा देवता) को गन्ध, वस्त्र, अक्षत आदि से विधिपूर्वक वेदिका के मध्य में चावलों पर रखकर पूजा करनी चाहिए।।९।।

**क्रमागतः-**

**वृहद् दैवज्ञरञ्जनेपूजाप्रकारः—**

मन्त्रेणानेन रेवतं गन्धवस्त्राक्षतादिभिः।
विधिवद्वेदिकामध्ये तण्डुलोपरि पूजयेत्।।
परितः स्वस्वमन्त्रैस्तान् लोकपालाश्च पूजयेत्।
प्राग्वदगजयोर्मध्ये देवं तस्य समीपतः।।
ऋग्वेदादियजुर्वेदान्याये द्वारेषु पूर्वतः।
पूर्णकुंभान्रक्त वर्णान्गन्धवस्त्राद्यलंकृतान्।।

द्वारे संस्थाप्य चालिङ्गैर्मन्त्रै कार्यं समर्चनम्।
रेवंत पूजामाचार्यः कृत्वा गृह्यविधानतः।।
स्थापयेत्तं व्याहृति भिस्तस्मिन्कुंडे हुताशनम्।
ततस्तत्राज्यभागान्ते मुख्याहुति मत्तंद्रितः।।
आग्नेयेति स्वाहेति हुत्वा घृतेनादौ प्रयत्नतः।
रेवतं पूजा मन्त्रेण आद्यन्त प्रणवेन च।।
पालाश समिधाज्यान्नैः पृथगष्टोत्तरशतम्।
आचार्यो जुहुयाद्व्रीहीन तिलान्व्याहृतिभिस्ततः।।
एकरात्रं त्रिरात्रं वा नवसप्तथापि वा।
अनेन विधिना कुर्यादेकभक्तो जितेन्द्रियः।।

—(ना. सं.-अश्वशान्ति अध्याय ८२, ७३-८० श्लोक)

**परितः स्वस्वमन्त्रैस्ताँल्लोकपालांश्च पूजयेत्।**
**प्राग्वद्गजाः पञ्च षड्वै रेवन्तस्य समीपतः।।१०।।**

रेवन्त के समीप पूर्ववत् पाँच-छः हाथियों तथा चारों ओर अपने-अपने मन्त्रों के द्वारा उन-उन लोकपालों का पूजन करना चाहिए।।१०।।

क्रमागतः-

वृहद्दैवज्ञ रञ्जने पूजा प्रकारः—

जपादिपूर्वकं सम्यक् कर्त्ता पूर्णाहुति नयेत्।
ततो मङ्गल घोषैश्च नैवेद्यं च समर्पयेत्।।
ततस्तद् घृतशेषेण सहकुंभोदकेन च।
प्रदक्षिणां व्रजेदश्वान्स प्रीतो बलिमुत्तमम्।।
जीमूतस्येत्यनूवाकान् चतुरो दिक्षु निक्षिपेत्।
आचार्याय ततो दद्यादक्षिणां गोचतुष्टयम्।।
तदर्धं वा तदर्धं वा यथा वित्तानुसारतः।
ब्राह्मणेभ्यो याचकेभ्य आचार्यार्द्धं प्रदापयेत्।।
ब्राह्मणान् भोजयेत्पश्चाच्छान्ति वाचनपूर्वकम्।
एवं यः कुरूते सम्यगश्वशान्तिमनुत्तमम्।।
मुच्यते सर्वरोगेभ्यो वर्द्धते नात्रसंशयः।
ऐश्वर्यं चिरलक्ष्मीं च लभते सर्वदा नृपः।।
तस्मात्सर्वप्रयत्नेन त्विमां शान्तिं समाचरेत्।।

*—(ना. सं.-अश्वशान्ति अध्याय ८२, ८१-८७ श्लोक)*

**ऋग्वेदादि चतुर्वेदाञ्जपेद् द्वारेषु पूर्वतः।**
**पूर्णकुम्भान् रक्तवर्णान् गन्धवस्त्राद्यलङ्कृतान्।।११।।**

रक्तवर्ण वाले पूर्ण कुम्भों को वस्त्रादि से सुशोभित करके ऋग्वेदादि चतुर्वेदों का जप द्वारों के पूर्व में करना चाहिए॥११॥

क्रमागतः–

नारदः–

सगणपति सौराश्च रैवन्तस्य समन्ततः।
ऋग्वेदादि चतुर्वेदान्यजेद्द्वारेषु पूर्वतः॥
रक्तवर्णान्पूर्ण कुम्भान्वस्त्रगन्धाद्यलंकृतान्।
पञ्चत्वकपल्लवोपेतान्पञ्चामृत समन्वितान्॥
द्वारेषु स्थाप्य तल्लिङ्गैर्मन्त्रैर्विप्रान् प्रपूजयेत्।
एवं तु पूजामाचार्यः कृत्वा गृह्यविधानतः॥

—(ना. सं.-अश्वशान्ति अध्याय ९-११ श्लोक)

**पञ्चत्वक्पल्लवोपेतानष्टमृद्भिः सुसञ्युतान्।**
**द्वारेषु स्थाप्य चाब्लिङ्गमन्त्रैः कार्यं समर्चनम्॥१२॥**

पञ्चत्वचा युक्त पञ्चपल्लवों, अष्टमृत्तिका से सञ्युक्त द्वारों में स्थापना करके "अब्लिङ्गमन्त्रों" द्वारा अर्चना करनी चाहिए॥१२॥

**रेवन्तपूजामाचार्यः कृत्वा गृह्यविधानतः।**
**स्थापयेत्तं व्याहृतिभिस्तस्मिन्कुण्डे हुताशनम्॥१३॥**

रेवन्त की पूजा में नियुक्त आचार्य को गृह्यसूत्र के विधान से व्याहृतियों के द्वारा कुण्ड में अग्नि स्थापन करें॥१३॥

**ततस्तत्राज्यभागान्ते मुखाहुतिमतन्द्रितः।**
**अग्नये स्वाहेति हुत्वा घृतेनादौ प्रयत्नतः॥१४॥**

तत्पश्चात् घी के भागान्त मुख आहुति आलस्य रहित होकर दे "अग्नयेस्वाहा" इतना कहकर पहले प्रयत्न से घी की आहुति दे॥१४॥

क्रमागतः–

नारदः–

स्थापयेत्तु व्याहृतिभिस्तस्मिन्कुण्डे हुताशनम्।
ततस्तदाज्यभागान्ते मुख्याहुतिमतन्द्रितः॥
"अग्नयेस्वाहे" ति हुत्वा घृतेनादौ प्रयत्नतः।
एवं तु पूजामन्त्रेण ह्याद्यं तु प्रणवेन च॥
पलाश समिदाज्यान्नैः शतमष्टोत्तरं हुनेत।
प्रत्येकं जुहुयात्भक्त्या तिलान्व्याहृतिभिस्ततः॥

**—(ना. सं.-अश्वशान्ति अध्याय १२-१४ श्लोक)**

**रेवन्त पूजा मन्त्रेण आद्यन्तप्रणवेन च।**
**पलाशसमिधाज्यन्नैः पृथगष्टोत्तरशतम्॥१५॥**

रेवन्त पूजा मन्त्र से आदि-अन्त में प्रणव (ॐकार) मन्त्र के द्वारा पलाश समिधा, घी तथा अन्न के द्वारा अलग-अलग १०८ बार आहुति दें॥१५॥

**आचार्यो जुहुयाद् व्रीहींस्तिलान्व्याहृतिभिस्ततः।**
**एकरात्रं त्रिरात्रं वा नवरात्रमथापि वा॥१६॥**

आचार्य को चावल, तिल तथा व्याहृतियों द्वारा एक रात्रि, तीन रात्रि अथवा नौ रात्रि तक होम करना चाहिए॥१६॥

**अनेन विधिनां कुर्यादेक भुक्तो जितेन्द्रियः।**
**जपादिपूर्वकं सम्यक्कर्त्ता पूर्णाहुतिं चरेत्॥१७॥**

इस विधि से नक्तव्रत रखकर, जितेन्द्रिय रहकर जपादिपूर्वक भलीभाँति होमादि करके पूर्णाहुति देनी चाहिए॥१७॥

**क्रमागतः–**

**नारदः–**

एक रात्रं त्रिरात्रं वा नवरात्रमथापि वा।
अनेन विधिना कुर्याद्यथाशक्त्या जितेन्द्रियः॥
जपादिपूर्वक सम्यक् कर्त्ता पूर्णाहुति हुनेत्।
ततो मङ्गलघोषैश्च नैवेद्यं च समर्पयेत्॥

—(ना. सं.-अश्वशान्ति, १५-१६ श्लोक)

**ततो मङ्गलघोषैश्च नैवेद्यं च समर्पयेत्।**
**ततस्तद् हुतशेषेण सह कुंभोदकेन च॥१८॥**
**प्रदक्षिणां व्रजन्त्यश्वान्सुप्रीतो बलिमुत्तमम्।**
**जीमूतस्येत्यनुवाकान् चतुरो दिक्षु निक्षिपेत्॥१९॥**

तत्पश्चात् मङ्गल वाद्यों द्वारा नैवेद्य अर्पित करना चाहिए। पुनः बची हुई हवन सामग्री एवं आमन्त्रित कुंभ जल लेकर प्रदक्षिणा करता हुआ घोड़ों की अच्छी प्रीति के लिए ''जीमूतस्य'' इस अनुवाक्य के द्वारा उत्तम बलि सामग्रियों को चारों ओर फेंके॥१८-१९॥

**क्रमागतः–**

**नारदः–**

**ततस्ते हुतशेषेण सम्यक्कुम्भोदकैर्द्विजाः।**
**प्रादक्षिण्य व्रजन्तोऽश्वाञ्जयन्त बलिमुत्तमम्॥**
**जीमूतस्येत्यनूवाकाञ्चतुर्दिक्षु विनिःक्षिपेत्।**
**आचार्ययततो दद्यादक्षिणां निष्कपञ्चकम्॥**

तदर्द्धं वा तदर्द्धं वा यथाशक्त्यनुसारतः।
ऋत्विग्भ्यो दक्षिणां दद्याद्धेनुं वस्त्रं धनादिकम्।।
ब्राह्मणान्भोजयेत्पश्चाच्छान्तिवाचनपूर्वकम्।
एवं यः कुरूते सम्यगश्वशान्तिमनुत्तमाम्।।
—(ना. सं.-अश्वशान्ति, १७-२० श्लोक)

**आचार्याय ततो दद्याद्दक्षिणां गोचतुष्टयम्।**
**तदर्धं वा तदर्धं वा यथावित्तानुसारतः।।२०।।**

तत्पश्चात् आचार्य को चार गाय तथा दक्षिणा देनी चाहिए। दक्षिणा आधी, पुनः आधी या अपने धन के अनुसार देनी चाहिए।।२०।।

**ब्राह्मणेभ्यो जापकेभ्यस्त्वाचार्यार्द्धं प्रदापयेत्।**
**ब्राह्मणान्भोजयेत् पश्चाच्छान्तिवाचनपूर्वकम्।।२१।।**

ब्राह्मणों के लिए, जापकों के लिये आचार्य से आधी दक्षिणा देनी चाहिए। तत्पश्चात् शान्तिपाठ पूर्वक ब्राह्मणों को भोजन करवाना चाहिए।।२१।।

**एवं यः कुरूते सम्यगश्वशान्तिमनुत्तमाम्।**
**मुच्यते सर्वरोगेभ्यो वर्द्धन्ते नात्र संशयः।।२२।।**

इस प्रकार भलीभाँति जो उत्तम अश्वशान्ति को करता है, वह सभी रोगों से मुक्ति पाकर वृद्धि को प्राप्त होता है। इसमें संशय नहीं।।२२।।

**ऐश्वर्यं वीरलक्ष्मीं च लभते सर्वदा नृपः।**
**तस्मात्सर्वप्रयत्नेन त्विमां शान्तिं समाचरेत्।।२३।।**

**इति श्रीब्रह्मर्षि वृद्धवसिष्ठ विरचितायां संहितायां**
**अश्वारिष्टशान्त्याध्यायश्चतुस्त्रिंशः।।३४।।**

ऐश्वर्य, वीरलक्ष्मी सदैव राजा को प्राप्त होती है। अतः सम्यग्तया प्रयत्नपूर्वक इस शान्तिकर्म को करना चाहिए।।३४।।

वृद्धवसिष्ठसंहिता के ''अश्वारिष्टशान्त्याध्याय'' की
''नारायणी'' हिन्दी टीका सम्पूर्ण।।३४।।

**क्रमागतः–**
**नारदः–**

सोऽश्वाभिवृद्धिं लभते वीरलक्ष्मीं न संशयः।
यज्ञेनानेन सन्तुष्टा धातृ विष्णु महेश्वराः।।
आदिव्याद्याग्रहाः सर्वे शीताः स्युः पितरोगणाः।
लोकपालाश्च सन्तुष्टाः पिशाचाः डाकिनीगणाः।।
भूतप्रेताश्चगन्धर्वा यक्षराक्षसपन्नगाः।।
—(ना. सं.-अश्वशान्ति, २१-२३ श्लोक)

पाठान्तरम्

०१. (अ) ज१,२-भूपतेर्यत (—भूपतेर्यस्य)
ज१,२-सन्त्यक्त्वा (—सन्त्याश्वाः)
(ब) ज१-श्रीमान्सयेव, ज२-श्रीमान्सथैव (—श्रीमान्स एव)
ज१-मर्त्स्यात्, ज२-भर्वस्यात् (—तस्माद्हि)
०२. (अ) ज१,२-बहुरोगसः (—बहवोगदाः)
०३. (अ) ज१,२-रेवंतपूजा (—हेरम्बपूजां)
०४. (अ) ज१,२-द्वादश्यामश्वभे तथा (—द्वादश्यामश्वभेऽपि वा)
०५. (अ) ज१,२-विवाहस्त्रतोरणाद्यैलंकृतं (—वितानस्त्रक्तोरणाद्यैरलङ्कृतम्)
(ब) ज१,२-मासतः (—मानतः)
०७. (अ) ज१-पंचक्रा (—पञ्चवक्त्रं)
(ब) ज१,२-कुशखड्गं, मु. पु. कशाखण्डं (—कशाखड्गं)
१०. (अ) ज१,२-परितश्चेतिमन्त्रेण (—परितः स्वस्वमन्त्रैः)
(ब) ज१,२-समंततः (—समीपतः)
१२. (ब) ज१-द्वारेषुवाप्य, ज२-द्वारेषु चाप्य (—द्वारेषु स्थाप्य)
ज१-चालिङ्गमत्रैः, ज२-वालिंगमन्त्रैः (—चाब्लिङ्गमन्त्रैः)
ज१-कार्यासमवर्ताः, ज२-कार्यासससमर्वतः (—कार्य समर्चनम्)
१३. (अ) ज१-रेवंतंपूज्यमाचार्यः, ज२-एवंत्यं पूज्यमाचार्ये (—रेवन्तपूजामाचार्यः)
१४. (अ) ज१-ततत्तरंतदाज्य, ज२-तत्तरंत्तदाज्य (—ततस्तत्राज्य)
१५-१६. ज१,२-पाठोनास्ति।
१७. (अ) ज. मो. विधिवां (—विधिनां)
(ब) मु. पु. हुनेत् (—चरेत्)
१९. (अ) ज१,२-व्रजन्तोश्वान् (—व्रजन्त्यश्वान्)
ज१-जपन्तोवमिमुत्तमं, ज२-अपंतोवमित्तमं (—सुप्रीतो बलिमुत्तमम्)
(ब) ज१,२-जीमूतस्यत्यनुवाकाश्च (—जीमूतस्येत्यनुवाकान्)
ज१, २-मिक्षिपेत् (—निक्षिपेत्)
२०. (अ) ज१-मोश्चनः पृथां, ज२-मोश्चतुःष्टयां (—गोचतुष्टयम्)
२२. (ब) ज१,२-वर्द्धते (—वर्द्धन्ते)
२३. (ब) ज१,२-हयशान्ति (—त्विमांशान्तिं)

पुष्पिका : ज१-इति श्रीवृद्धवासिष्ठ ब्रह्मर्षि विरचितायां महासंहितायांश्वशान्तिस्वरूपलक्षणं नाम चतुत्रिंशतमोऽध्यायः॥३४॥

पुष्पिका : ज२-इति श्रीवृद्धवासिष्ठ ब्रह्मर्षि विरचितायां महासंहितायां
**अश्वशान्तिस्वरूपलक्षणं नाम चतुत्रिंशतमोऽध्यायः॥३४॥**

***

## ३५

# अथ गजारिष्टशान्त्यध्यायः

यस्य राज्ञो गजाः सन्ति तदधीनाऽखिलाधरा।
तस्माद्गजाः कल्पनीयाः पौषणीयाश्च सर्वदा॥१॥

**नारायणी टीका**

जिस राजा के पास अधिक हों, उसके आधीन समस्त पृथ्वी होती है; इसलिए हाथियों का पालन-पौषण सर्वदा करना चाहिए॥१॥

कल्पनं पौषणं तेषां गजवक्त्रप्रसादतः।
तस्माद्गजाननो राज्ञां पूजनीयः प्रयत्नतः॥२॥

उनका पालन-पौषण भगवान् श्रीगणेश जी की कृपा से होता है; इसलिए राजा को श्रीगणेश जी की पूजा प्रयत्नपूर्वक करनी चाहिए॥२॥

तस्मिन्सम्पूजिते प्रीता ब्रह्मविष्णुमहेश्वराः।
इन्दादिलोकपालश्च वस्वादित्यमरूद्गणाः॥३॥
सुरासुरा ग्रहाः सर्वे गन्धर्वोरग्रराक्षसाः।
सिद्धविद्याधरा यक्षपिशाचाः सप्तमातृकाः॥४॥
वेतालडाकिनी भूता दिशन्त्वपि मनोरथान्।
गजाननो गजपतिर्गजसूक्तं जपेत्सदा॥५॥

श्रीगणेश जी की पूजा करने से ब्रह्मा, विष्णु, महेश, इन्द्र इत्यादि समस्त लोकपाल, वसु, आदित्य और मरुद्गण प्रसन्न हो जाते हैं। सभी देवता एवं राक्षस, नवग्रह, गन्धर्व, सर्प, राक्षस, सिद्धविद्याधर, यक्ष, पिशाच एवं सप्तमातृकायें, वेताल, डाकिनी तथा भूत भी मनोरथों को पूरा करते हैं। श्रीगणेश एवं गजेन्द्र का सर्वदा गजसूक्त से जप करना चाहिए॥३-५॥

असावेव प्रभुस्तेषां पोषणे शोषणे सदा।
पुरा महेश्वरो देव उक्तवानस्य जन्मनि॥६॥

वही हाथियों का पोषण-शोषण सर्वदा करते हैं, प्राचीन समय में श्रीगणेश के जन्म समय पर भगवान् शङ्कर देव ने स्वयं बताया था॥६॥

यदा यदा गजानां च जायन्ते व्याधयस्तदा।
तदा शान्तिं प्रकुर्वन्ति पूजा होमजपादिभिः॥७॥

जब-जब हाथियों को रोग उत्पन्न हों, तब-तब पूजा, होम, जपादि से शान्ति करवानी चाहिए॥७॥

भानुवारे च संङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः।
विषुवत्ययने चैव व्यतीपाते दिनक्षये॥८॥
अन्ये च पुण्यदिवसे चन्द्रतारा बलेष्वपि।
दिक्साधनं समभुवि चैशान्ये च सुरालये॥९॥

रविवार और सङ्क्रान्ति, सूर्यचन्द्र ग्रहणकाल, विषुवत संक्रान्ति, उत्तरायण दक्षिणायन काल में, व्यतीपात योग में तथा तिथिक्षय के अतरिक्त अन्य पुण्य दिवसों में, चन्द्र-ताराबल अनुकूल होने पर ईशान कोण के देवालय में समतल भूमि पर दिक् साधन ईशान कोण करें ॥८-९॥

मध्याद्विनिर्गतैः सूत्रैश्चतुरस्त्रं च कारयेत्।
मण्डपं त्वष्टभिर्हस्तैः सूत्रमार्गेण कारयेत्॥१०॥

मध्य से निकले हुए सूत्र से चारों दिशाओं में सूत्रमार्ग से अष्टहस्त परिमित चकोणा मण्डप निर्माण करें॥१०॥

चतुषष्टिदलं कृत्वा मण्डपान्तःक्ष्मातलम्।
मध्ये चतुष्पदं व्योममण्डलं वेदिकास्थलम्॥११॥

चौसठ दल बनाकर मण्डप के अन्त तक भूमितल पर मध्य में चतुष्पद आकाश मण्डल वेदिका स्थल बनावें॥११॥

द्वादशांशात्मकं वायुमण्डलं व्योमवेष्टितम्।
विंशाशकात्मकं वह्निमण्डलं व्योमवेष्टितम्॥१२॥

बारह अंशात्मक वायुमण्डल आकाश की ओर आच्छादित करके पुनः बीस अंशात्मक अग्नि मण्डल को ऊपर से आच्छादित करें॥१२॥

निखिलान्मण्डलान्वेष्ट्य महीमण्डलमास्थितम्।
ज्ञात्वाग्निमण्डलं तत्र दिक्षु कुण्डचतुष्टयम्॥१३॥

समस्त मण्डलों को आच्छादित कर पृथ्वीमण्डल पर स्थित होकर अग्निमण्डल का ज्ञान करके चारों दिशाओं में चार कुण्ड बनावें॥१३॥

प्रागरेखामध्यमं कुण्डं द्वारं चैकांशमानतः।
तथैव कुण्डद्वारं च शेषदिक्षु प्रकल्पयेत॥१४॥

पुनः आगे रेखा मध्य में एकांश मान से कुण्डद्वार बनावे। उसी भान्ति शेष दिशाओं में कुण्डद्वार कल्पित करें॥१४॥

**पूर्वोक्तलक्षणोपेतं मेखलावस्त्रसञ्युतम्।**
**तोरणाद्यैरलंकृत्य वितानं वेदिकोपरि॥१५॥**

पूर्वोक्त लक्षणों से युक्त मेखला (करधनी) और वस्त्रादि से सञ्युक्त तोरण आदि से सुशोभित करके वेदिका के ऊपर वितान (चन्दोवा) का निर्माण करें॥१५॥

**आशिषो वाचनं कुर्य्यात्सम्यकसङ्कल्पपूर्वकम्।**
**ऋत्विजो वरयेत्पश्चाच्चतुर्विंशति संख्यकान्॥१६॥**

आशीष वचनों को भलीभाँति सङ्कल्प पूर्वक करके चौबीस (२४) संख्या में ऋत्विजों का वरण करें॥१६॥

**विद्यातपोव्रत युतान्विधिज्ञान्कुशलाञ्छुभान्।**
**तेषां मध्ये शिष्टतममाचार्यं तं प्रकल्पयेत्॥१७॥**

विद्या, तपोबल व्रत से युक्त अनेक प्रकार की विधियों का ज्ञाता, कुशल, चुतर और शुभ वेदपाठियों में बीच में से एक श्रेष्ठ विद्वान को आचार्य बनावें॥१७॥

**मधुपर्कादिकं कुर्यात्तत्र कार्ये नियोजयेत्।**
**ब्राह्मणाँश्चतुरो होतृन्कुण्डेषु च नियोजयेत्॥१८॥**

मधुपर्क इत्यादि ब्राह्मणों को खिलाकर उनका उनका कार्य सौंप दे, चार निपुण ब्राह्मणों को होता बनाकर कुण्डों पर नियोजित करें॥१८॥

**द्वारेषु जापकानष्टौ षड्संख्यानंगजापकान्।**
**गन्धपुष्पादिकं दत्त्वा तत्तत्कार्ये विनियोजयेत्॥१९॥**

द्वारों पर आठ जापकों को, छः संख्या में अनङ्ग जापकों को गन्ध, पुष्पादि देकर उनको उनका कार्य सौंप दें॥१९॥

**ब्राह्मणाँस्तत्त्वसंख्यकान् भोजयेच्च यथाविधि।**
**कारयेत्तु सुवर्णेन गजवक्त्रं चतुर्भुजम्॥२०॥**

तत्पश्चात् पच्चीस संख्या में ब्राह्मणों को यथाविधि भोजन करावें तथा चतुर्भुज गजवक्त्र को स्वर्णमूर्ति भी बनावें॥२०॥

**अक्षमालाधरं चाब्जबीजदण्डधरं क्रमात्।**
**वाहनायुधवर्णादीन्सर्वेषां कथितं पुरा॥२१॥**

रुद्राक्ष की माला धारण करने वाले, कमल पुष्प तथा दण्ड को धारण करने वाले, वाहन, अस्त्र, शस्त्र रंग-रूपादि पहले कह चुके हैं॥२१॥

**तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि।**
**तन्नो दन्तिः प्रचोदयात् वामदेवाह्वयो ऋषिः॥२२॥**

उस पुरुष को जानते हुए वक्रतुण्ड श्रीगणेश जी का ध्यान करते हैं। वामदेव ऋषि द्वारा कहे हुए एकदन्त श्रीगणेश जी हमें बुद्धि प्रदान करें॥२२॥

**छन्दोऽसौ तत्र गायत्री गजवक्त्रो हि देवता।**
**कुम्भाष्टकं चतुर्द्वारि पूर्वोक्त द्रव्यसंयुतम्॥२३॥**

इसका गायत्री छन्द और देवता श्रीगणेश जी हैं! पूर्वोक्त द्रव्यों से संयुत आठ कुम्भ चार द्वारों पर स्थापित करें॥२३॥

**लिखेदष्टदलं पद्मं वेदिकां तण्डुलोपरि।**
**गजवक्त्र कर्णिकायां लोकपालान्दलेषु च॥२४॥**

अष्टदल कमल लिखकर वेदिका में चावलों पर श्रीगणेश जी तथा उनकी कर्णिका में लोकपालों का दल स्थापित करें॥२४॥

**गणेशशक्रयोर्मध्ये पद्ममष्टदलं लिखेत्।**
**आदित्यादिग्रहांस्तत्र पूजयेत्पूर्ववत्क्रमात्॥२५॥**

श्रीगणेश और देवराज इन्द्र के मध्य में अष्टदल कमल लिखे, सूर्यादि नवग्रहों की पूर्ववत् क्रम से पूजा करें॥२५॥

**गणेश यमयोर्मध्ये पञ्चकोणं प्रकल्पयेत।**
**तत्र पञ्चमहाभूतानर्चयेत्पूर्ववत्तदा॥२६॥**

श्रीगणेश और धर्मराज के मध्य में पाँच कोणों की परिकल्पना करके पञ्चमहाभूतों की पूर्ववत् पूजा अर्चना करें॥२६॥

**गणेशाम्बुपयोर्मध्ये वर्तुलं मण्डलं लिखेत्।**
**तत्रार्चयेदष्टभुजां महिषासुरमर्दिनीम्॥२७॥**

श्रीगणेश और वरुणदेव के मध्य में वर्तुलाकार मण्डल चित्रित करें तथा वहाँ महिषासुर को मारने वाली अष्टभुजी माँ भगवती दुर्गा की अर्चना करें॥२७॥

**गणेशसोमयोर्मध्ये मण्डले वर्तुलं लिखेत्।**
**तत्रार्चयेत्प्रयत्नेन चाश्विनीदेवताह्वयम्॥२८॥**

श्रीगणेश और सोमदेव के मध्यम में वर्तुलाकार मण्डल लिखें तथा वहाँ प्रयत्नपूर्वक दोनों अश्विनी कुमारों की अर्चना करें॥२८॥

**ऐशान्यामर्चयेद्रुद्रमण्डलं तेजसां निधिम्।**
**आग्नेय्यामर्चयेद्विष्णु मण्डलं हायकात्मकम्॥२९॥**

ईशान कोण में तपस्वियों की निधि एवं रुद्रमण्डल की अर्चना करें और अग्निकोण में हाटकात्मक विष्णुमण्डल की अर्चना करें॥२९॥

वेदात्मक च नैर्ऋत्यामर्चयेद्ब्रह्ममण्डलम्।
वायव्यामर्चयेत्सम्यङ्‌मण्डलं प्रणवात्मकम्॥३०॥

वेदात्मक ब्रह्ममण्डल की पूजा नैर्ऋत्यकोण में करें तथा वायव्य कोण में भलीभाँति प्रणवात्मक मण्डल की पूजा करें॥३०॥

रुद्रेण पुरुषसूक्तेन चतुर्वेदादिमन्त्रकैः।
प्रणवस्थ ऋषिच्छन्दो देवताः कथिताः पुरा॥३१॥

रुद्रसूक्त, पुरुषसूक्त तथा चारों वेदों के मन्त्रों द्वारा पूजन करें। प्रणव ऋषि, छन्द एवं देवता के सन्दर्भ में पूर्व कह चुके हैं॥३१॥

तत्तद्वर्णैर्गन्धपुष्पैर्वस्त्रधूपैश्च दीपकैः।
सम्यक्कृत्वोपचाराणि रक्त वस्त्रैर्गजाननम्॥३२॥

उन-उन प्रकार के वर्ण (देवताओं के वर्ण), गन्ध, पुष्प, वस्त्र, धूप, दीपक भलीभाँति उपचारपूर्वक रक्तवस्त्र से श्री गणेश जी का पूजन करें॥३२॥

प्राक् कुण्डं गजवक्त्रस्य पञ्चभूतात्मकं यमः।
दुर्गाकुण्डं प्रतीच्यां च ह्युदक्कुण्डं ग्रहात्मकम्॥३३॥

पूर्वकुण्ड श्रीगणेश जी का, पञ्चभूतों का दक्षिण में, दुर्गाकुण्ड पश्चिम में तथा उत्तर में ग्रहकुण्ड बनावें॥३३॥

तदेवाश्विनकुण्डं च ग्रहहोममतः परम्।
दिक्कुण्डैर्दिक्षु दिग्होमः कर्त्तव्या स्वस्वमन्त्रकैः॥३४॥

वैसे ही अश्विनी कुमारों के कुण्ड का निर्माण करें तत्पश्चात् ग्रहों का होम के पश्चात् दिक् कुण्ड की ओर अपने-अपने मन्त्रों से दिक् होम करना चाहिए॥३४॥

स्वगृहविधिना कुण्डे स्थापयेच्च हुताशनम्।
मुखान्ते स्वस्वकुण्डे च जुहुयात्तन्मुखाहुतिम्॥३५॥

अपने गृह्य विधान से अग्निकुण्ड की स्थापना करते हुए अग्नि स्थापना करके मुख के अन्तिम भाग में अपने-अपने कुण्ड में मुखाहुति से हवन करें॥३५॥

पालाशसमिधाज्यान्नैः पृथगष्टोत्तरं शतम्।
ग्रहहोमैः समिद्भिश्च होमं पूर्ववदाचरेत्॥३६॥

पलाश समिधा, घी, अन्नादि के द्वारा १०८ बार भिन्न-भिन्न होम करें तथा ग्रहों का होम ग्रहों की समिधाओं से पूर्ववत् करना चाहिए॥३६॥

चतुर्दिक्षु चतुर्वेदपरायणपरा द्विजाः।
अब्लिङ्गैर्वारुणैः सूक्तैः कलशार्चनपराश्चते॥३७॥

चारों दिशाओं में चारों वेदों के परायण ब्राह्मण अब्लिंगवरुण सूक्तों के द्वारा कलश की पूजा अर्चन करें॥३७॥

**नैवेद्यं विविधान्नेन बहुवाद्यैः समर्चयेत्।**
**ताम्बुलानि ततो दद्याच्छान्तिवाचनपूर्वकम्॥३८॥**

विविध प्रकार के अन्न पदार्थों के द्वारा अनेक प्रकार के वाद्यों को बजाता हुआ नैवेद्य अर्पित करके पूजा करे तथा शान्तिवाचनपूर्वक ताम्बूल आदि प्रदान करें॥३८॥

**एकरात्रं त्रिरात्रं वा नवरात्रमथापि च।**
**अनेन विधिना कुर्यादकभुक्तो जितेन्द्रियः॥३९॥**

एक रात्रि, तीन रात्रि अथवा नौ रात्रि तक जितेन्द्रिय रहकर, एक समय भोजन करके इस विधि से पूजा करे॥३९॥

**तिलहोमं व्याहृतिभिः सहस्रं चाष्टसंयुतम्।**
**एवं प्रतिदिनं सम्यग्व्रीहिभिश्च यथा पुरा॥४०॥**

१००८ बार व्याहृतियों द्वारा तिलहोम करे एवं प्रतिदिन जैसा पहले कहा गय है, भलीभाँति चावल-यव इत्यादि अन्नों से होम करें॥४०॥

**सम्पूर्णदिवसे कर्ता कुर्यात्पूर्णाहुतिं ततः।**
**मन्त्रपूतोदकैः कर्त्ता गजानां मार्जयेत्ततः॥४१॥**

यज्ञ के अन्तिम दिवस में कर्ता पूर्णाहुति करे तथा मन्त्रों द्वारा पवित्र किये गये जल से हाथियों का मार्जन करें॥४१॥

**अलङ्कृत्य पुनः सम्यगगन्धपुष्पादिभिस्ततः।**
**हुतशेषं ततो दद्यादौपनायनिकं गजे॥४२॥**

पुनः भलीभाँति गन्ध, पुष्पादि से सुशोभित करके हुतशेष (बची हुई हवन सामग्री) के द्वारा औपनायिक हव्य गज को दे॥४२॥

**दोषशान्तिपञ्चदुर्गां रुद्रं पुरुषसूक्तकम्।**
**पञ्चब्रह्मादिभिर्मन्त्रैर्गजशालासुमार्जयेत्॥४३॥**

दोषशान्त्यर्थ पञ्चदुर्गासूक्त, रुद्रसूक्त, पुरुषसूक्त, पञ्च ब्रह्मादि मन्त्रों द्वारा गजशाला का मार्जन करना चाहिए॥४३॥

**गृहीत्वा सुकृतं तेभ्यो दक्षिणां च समर्पयेत्।**
**आचार्याय ततो दद्यान्निष्कानामेकविंशतिम्॥४४॥**

सुकृत अर्थात् ब्राह्मणों से पुण्य ग्रहण करके उनको दक्षिणा देनी चाहिए। आचार्य को इक्कीस निष्क दक्षिणा देनी चाहिए॥४४॥

तदर्द्धमितरेभ्यश्च यजेच्छेषान्स्वशक्तितः।
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः॥४५॥

आचार्य से आधी दक्षिणा अन्य ब्राह्मणों को देनी चाहिए, शेषजनों को अपनी शक्ति अनुसार दक्षिणा दे तत्पश्चात् ब्राह्मणों को भोजन करवाकर स्वयं बन्धुओं सहित भोजन करें॥४५॥

एवं यः कुरुते सम्यग्गजशान्तिं नृपोत्तमः।
सर्वान्कामानवाप्नोति गजवृद्धिं लभेतु सः॥४६॥

इति श्री ब्रह्मर्षिवृद्धवसिष्ठविरचितायां महासंहितायां
गजशान्त्यध्यायः पञ्चत्रिंशः॥३५॥

इस प्रकार श्रेष्ठ राजा गजशान्ति करे तो सभी कामनाओं की पूर्ति के साथ-साथ हाथियों की वृद्धि भी हो जाती है॥४६॥

वृद्धिवसिष्ठसंहिता के गजशान्त्याध्याय की नारायणी हिन्दी टिका सम्पूर्ण॥३५॥

**पाठान्तरम्**

०१. (अ) ज१,२-तदवीना (—तदधीना)
०२. (ब) ज१-राक्षः, ज२-राज्ञाः (—राज्ञां)
०५. (ब) ज१-गजपठितिर्गद्रिज्जुतस्तंपश्चामवेत् (—गजपतिर्गजसूक्तं जपेत्सदा)
०६-०८. ज१,२-पाठोनास्ति
०९-१०. ज१,२-पाठोनास्ति
११-१२. ज१,२-पाठोनास्ति
११. (अ) मु. पु. मडपांतः (—मण्डप्रान्तः)
१४. (अ) ज१,२-प्रागेवा (—प्रागरेखा)
१५. (अ) ज१,२-मेखलावस्त्रे, मु. पु. मेखलावप्र (—मेखलावस्त्र)
१६. (अ) ज१-वाचं (—वाचनं)
(ब) ज१,२-ऋत्विजान् (—ऋत्विजो)
१७. (अ) ज१-युतान्विक्षतान्कुलजान् शुभान्,
ज२-युवान्विज्ञातान्कुलजान् शुभात् (—युतान्विधिज्ञान्कुशलाञ्छुभान्)
१८. (ब) ज१,२-ब्राह्मणान्चतुरो (—ब्राह्मणाँश्चतुरो)
ज१-होतृन्कुण्डेषु, ज२-होतृतकुंडेषु (—होतृन्कुण्डेषु)
२०. (अ) ज१,२-ब्राह्मणाः पंचविप्राश्च (—ब्राह्मणाँस्तत्वसंख्यकान्)
२१. (अ) ज१,२-अश्वक्षमालायरश्चोष्टगजं (—अक्षमालाधरं चाब्जबीजदण्डधरं)
२४. (ब) ज१,२-कन्यकायां (—कर्णिकायां)
२५. (ब) ज१,२-पूर्वतः क्रमात् (—पूर्ववत्क्रमात्)
२९. (अ) ज१,२-भूमौमंडलं (—रुद्रमण्डलं)

(ब) ज१,२-हाकलात्मकं (—हाटकात्मकम्)

३०. (अ) ज१-रसमंडलं, ज२-समंडलं (—ब्रह्ममण्डलं)

३१. (अ) ज१-रूद्न —(रूद्रेण), ज१२-चतुर्वेदोक्त (—चतुर्वेदादि)

३२. (अ) ज१,२-क्षीणाकै: (—दीपकै:)

३३. (अ) मु. पु. तत: (—यम:)

३४. (ब) ज१,२-तिथिर्होमं, मु. पु. दिग्घोम: (—दिग्होम:)
ज१,२-कर्त्तव्यं (—कर्त्तव्य:)

३५. (ब) ज१-सुखन्नि, ज२-मुखनि (मुखान्ते)

३६. (अ) ज१-याचतुशामेधाज्यानै:, ज२-याचतुशतंसमिधाज्यान्नै:
(—पलाशसमिधाज्यान्नै:)

(ब) ज१,२-ग्रहमन्त्रै: (—ग्रहहोमै:)

३७. (ब) ज१-अग्निर्वारुणो, ज२-अग्निगेवारुणौ: (—अब्लिङ्गैर्वारुणै:)

३८. (अ) ज१-विनातेन, ज२-विनानेन (—विविधान्नेन)

३९. (ब) ज१-कुर्यादिक्भुक्ती, मु. पु. कुर्यादिकभक्तो (—कुर्यादेकभुक्तो)

४०. (अ) ज१,२-वार्ष्टसंयुतं (—चाष्टसञ्युतम्)

(ब) ज१-प्रिय, ज२-प्रियं (—एवं)

४१. (अ) ज१,२-दिवसं कर्त्तव्या: (—दिवसे कर्त्ता)

(ब) ज१-कर्तुगजात्, ज२-कर्तु:गजात् (—कर्ता गजानां)

४३. (अ) ज१,२-सारुद्र (—रुद्रं)

(ब) ज१-गजशालासमर्चयेत्, ज२-गजन्यालांसमर्चयेत्
(—गजशालासुमार्जयेत्)

४५. (अ) ज१-तदर्द्धर्द्धमितं तेषां, ज२-तदर्द्धार्द्धमितं तेषां
(—तदर्द्धमितरेभ्यश्च)
ज१-युगेशेषांस्वशक्ति:, ज२-यगेशेषांस्वशक्तित:
(—यजेच्छेषान्स्वशक्तित:)

पुष्पिका:—ज१-इति श्रीवृद्धवसिष्ठ ब्रह्मर्षि विरचितायां महासंहितायां
गजशान्ति लक्षणं नाम पञ्चत्रिशतमोऽध्याय:।।३५।।

पुष्पिका:—ज२-इति श्रीवसिष्ठ संहितायां
गजशान्तिलक्षण नाम पञ्चत्रिशतमोऽध्याय:।।३५।।

***

# ३६

# अथ ग्रहणशान्त्याध्यायः

यस्य वै जन्मनक्षत्रे ग्रस्येते शशिभास्करौ।
तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः॥१॥

जिसके जन्म नक्षत्र पर सूर्यचन्द्र ग्रहण हो, उसे भयङ्कर रोगभय होता है। जन्मराशि पर सूर्य-चन्द्र ग्रहण घटित हो तो धनक्षय होता है॥१॥

द्रव्यमन्त्रविधानेन तस्य दोषापनुत्तये।
उपरागस्नानविधिं सम्यग्वक्ष्ये समासतः॥२॥

अतः द्रव्य एवं मन्त्र विधान के द्वारा उन दोषों की शान्ति के लिये सूर्यचन्द्र ग्रहण में स्नान विधि को भलीभाँति संक्षेप में कहता हूँ॥२॥

मण्डलं चतुरस्रं तु गोमयेन विलेपयेत्।
गृहस्येशान भागे तु वर्णकैः समलङ्कृतम्॥३॥

घर के ईशान भाग में विविध रंगों से सुशोभित कर चतुरस्र मण्डल को गोबर से विलेपन करना चाहिये॥३॥

स्थापयेच्चतुरः कुम्भास्तत्र तान्सागरात्मकान्।
सर्वदेवात्मकान्स्मृत्वा सर्वतीर्थात्मकाञ्छुभान्॥४॥

सागरात्मक, सर्वदेवात्मक तथा सर्वतीर्थात्मक चार कलशों को वहाँ स्थापित करके शुभों का स्मरण करें॥४॥

पञ्चत्वक्पल्लवोशीर शतौषधिसमन्वितान्।
मृत्तिकारत्नहेमेभदन्तगुग्गुलुचन्दनैः ॥५॥

पञ्च त्वक् पल्लव, उशीर (खस) शतौषधि, मिट्टी, रत्न, स्वर्ण, गजदन्त, गुग्गलु तथा चन्दन से कलश को युक्त करें॥५॥

पञ्चगव्यामृतभ्राजत्स्फटिकैः सर्षपाम्बरैः।
शंखकुंकुमतीर्थाम्बुरोचनैः पद्मकैर्युतान्॥६॥

पञ्चगव्य (गोबर, मूत्र, दूध, दही, घी) पञ्चाऽमृत (दूध, दही, घी, शहद, शक्कर) सुशोभित स्फटिक, पीली सरसों, वस्त्र, शंख, कुंकुम, तीर्थों का जल, रोली कमलगट्टा से युक्त करें॥६॥

चत्वारः प्राङ्मुखा विप्राः प्रार्थयेयुः पृथक् पृथक्।
अब्लिङ्गैर्वारुणैः सूक्तैः स्वस्तिवाचनपूर्वकम्॥७॥

पूर्वाभिमुख विराजित चारों ब्राह्मण अलग-अलग प्रार्थना करके अब्लिङ्गवरुण सूक्तों द्वारा स्वस्तिवाचन करें॥७॥

**तिलहोमं व्याहृतिभिः सहस्रं चाष्टसञ्युतम्।**
**एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत्॥८॥**

व्याहृतियों के द्वारा तिल होम १००८ बार करके प्रयत्नपूर्वक स्नान कार्य करना चाहिए॥८॥

**आमन्त्र्य नवभिर्मन्त्रैः कुम्भान्सङ्कल्पपूर्वकान्।**
**एतानेव ततो मन्त्रान्स्वर्णपट्टे ततो लिखेत्॥९॥**

सङ्कल्पपूर्वक कुम्भों को नौ मन्त्रों द्वारा आमन्त्रित करें। तदनन्तर इन्हीं मन्त्रों को स्वर्णपट्ट पर लिखें॥९॥

**कर्तुः शिरसि तान्बध्वा वाब्लिङ्गैर्वेदमन्त्रकैः।**
**सुमन्त्रितैः कुम्भजलैः स्नाप्य नीराजयेत्ततः॥१०॥**

कर्त्ता के सिर पर उनको बांधकर अब्लिङ्ग वेदमन्त्रों के द्वारा भलीभाँति मन्त्रित कुंभजल से स्नान करके आरती करें॥१०॥

**दद्यात्पट्टं ग्रहज्ञेभ्यः शुक्लमाल्याम्बरः शुचिः।**
**ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः॥११॥**

ज्योतिषी महानुभाव को पवित्र सफेदवस्त्र-मालादि देकर स्वर्णपट्ट देना चाहिए तथा अन्य वेदपाठियों को अपनी शक्त्यानुसार दक्षिणा देनी चाहिए॥११॥

**योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः।**
**सहस्रनयनः शक्रो ग्रहपीडां व्यपोहतु॥१२॥**

जो वज्रधारी देव, आदित्यों के स्वामी, सहस्र नयनों वाले देवराज इन्द्र ग्रहों की पीड़ा को दूर करें॥१२॥

**चतुःशृङ्गः सप्तहस्तस्त्रिपादो मेषवाहनः।**
**अग्निश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु॥१३॥**

चार सींग, सात हाथ, तीन पाद तथा भेड़ के वाहन वाले अग्निदेव चन्द्रग्रहण में उत्पन्न ग्रहपीड़ा को दूर करें॥१३॥

**मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः।**
**चन्द्रोपराग सम्भूतामग्निः पीडां व्यपोहतु॥१४॥**

जो समस्त देवगणों में प्रमुख हैं, सप्तकिरणों से युक्त, अमित प्रकाश सम्पन्न अग्निदेव चन्द्रग्रहण में उत्पन्न ग्रह पीड़ा को दूर करें॥१४॥

यः कर्मसाक्षी लोकानां धर्मोमहिषवाहनः।
यमश्चन्द्रोपरागोत्था ग्रहपीडां व्योपहतु॥१५॥

जो तीनों लोकों के कर्म साक्षी है, ऐसे महिंष वाहन वाले धर्मराज (यमराज) चन्द्रमा ग्रहण से उत्पन्न ग्रह-पीड़ा को दूर करें॥१५॥

रक्षोगणाधिपः साक्षात्प्रलयानलसन्निभः।
खड्गव्यग्रोऽतिकायश्च रक्षः पीडां व्यपोहतु॥१६॥

राक्षसगणों के अधिपति, साक्षात् प्रलयकारी, अग्निकान्तिसदृश, तलवार, वाणादि से युक्त, दीर्घकाय रक्षदेव पीड़ा दूर करें॥१६॥

नागपाशधरो देवः सदा मकरवाहनः।
वरुणोऽम्बुपतिः साक्षाद् ग्रहपीडां व्यपोहतु॥१७॥

नागपाशधारी, मकर वाहन युक्त, जलाधिपति वरुण देव साक्षात् रूप में ग्रहपीड़ा को दूर करें॥१७॥

प्राणरूपो हि यो लोकान्याति कृष्णमृगप्रियः।
वायुश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु॥१८॥

प्राणरूप होकर तीनों लोकों में विचरण करने वाले, कृष्णमृग के प्रिय वायुदेव चन्द्रमा ग्रहण से उत्पन्न ग्रह-पीड़ा को दूर करें॥१८॥

योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः।
चन्द्रोपरागकलुषं पीडां चापि व्यपोहतु॥१९॥

जो धनाधिपति देव जिन्होंने खड्ग, शूल और गदा धारण की है, ऐसे देवता कुबेर चन्द्र ग्रहण से उत्पन्न ग्रह-पीड़ा को दूर करें॥१९॥

योऽसाविन्दुधरो रुद्रः पिनाकी वृषवाहनः।
चन्द्रोपराग पापानि स नाशयतु शङ्करः॥२०॥

चन्द्रमा को धारण करने वाले, पिनाक नामक धनुषधारी, बैल की सवारी वाले कल्याणकारी वे भगवान् रुद्रदेव (शिवजी) चन्द्रग्रहण में उत्पन्न पापों को विनष्ट करें॥२०॥

त्रैलोक्ये यानि भूतानि चराणि स्थवराणि च।
ब्रह्मार्कविष्णुयुक्तानि तानि पापं दहन्तु मे॥२१॥

तीनों लोकों में जितने भी चर एवं स्थावर प्राणी हैं, वे सभी ब्रह्मा, सूर्य एवं विष्णु युक्त हैं, वे सभी मेरे पापों को नष्ट करें॥२१॥

आमन्त्रेणे लेखकोक्तास्त्वेते वै नवमन्त्रकाः।
अर्चयित्वा पितृन्देवान्गोभूस्वर्णाम्बरादिभिः॥२२॥

लेखक के द्वारा कहे गए आमन्त्रित नौ मन्त्रों के द्वारा पितरों, देवताओं की गाय, पृथ्वी, स्वर्ण, वस्त्रादि से अर्चना करनी चाहिए।।२२।।

**अनेन विधिना यत्नाद् ग्रहस्नानं समाचरेत्।**
**न तस्य ग्रहपीडा वा न च बन्धुधनक्षयः।।२३।।**

इस विधि से प्रयत्नपूर्वक ग्रहस्नान करना चाहिए। ऐसा करने से ग्रहपीड़ा नहीं होती तथा बन्धु और धन क्षय भी नहीं होता।।२३।।

**परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम्।**
**सूर्यग्रहेऽप्येवमेव सूर्यनाम्ना विधीयते।।२४।।**

**इति श्री ब्रह्मर्षि वृद्धवसिष्ठ विरचितायां संहितायां**
**ग्रहणशान्त्यध्यायः षट्त्रिंशः।।३६।।**

परमसिद्धि को प्राप्त करता है, ऐसी सिद्धि की पुनरावृत्ति दुर्लभ है। सूर्यग्रहण में भी इसी विधि से सूर्य का नाम लेकर शान्ति कार्य करना चाहिए।।२४।।

वृद्धवसिष्ठ संहिता के ग्रहणशान्त्यध्याय की
"नारायणी" हिन्दी टीका सम्पूर्ण।।३६।।

**पाठान्तरम्**

०१. (अ) ज१,२-यस्यैव (—यस्य वै)
(ब) ज१,२-धनक्षयम् (—धनक्षयः)
०२. (ब) ज१,२-स्वाननविधिः (—स्नानविधं)
०४. (अ) ज१,२-कुंभान्तत्र (—कुम्भास्तत्र)
(ब) ज१,२-सर्वदेवात्मकान्कृत्वा (—सर्वदेवात्मकान्स्मृत्वा)
०५. (अ) ज१-पल्लवोपेतान्मतौषधि, ज२-वल्लवोपेतान्शतोषधिः
(पञ्चत्वक्पल्लवोशीर शतौषधि—)
(ब) ज१-मृतकारत्रहैमैश्च, ज२-मृत्तिकारत्नहेमेश्च (—मृत्तिकारत्नहेमे)
ज१,२-दंतं (—भदन्तं)
०६. (अ) ज१-पञ्चगव्योब्दत, ज२-पञ्चगव्यादिक (—पञ्चगव्यामृत)
ज१-भ्राजस्फटिकैः, ज२-भ्राम्यस्फुटिकैः (—भ्राजत्स्फटिकैः)
ज१-सर्ववास्वरैः, ज२-सर्वभास्वरैः (—सर्षपाम्बरैः)
(ब) ज१-पद्मकैर्युतं, ज२-मस्तकैःर्युतं (—पद्मकैर्युतान्)
०७. (ब) अंतिमैर्वाणेः, ज२-अन्तिमेर्वरुणो (—अब्लिङ्गैर्वारुणैः)
०८. (अ) ज१,२-चाष्टसंयुताः (—चाष्टसञ्युतम्)
०९. (अ) ज१-आमंत्रनवभिमंत्रैः, ज२-आमंत्रनर्वाममंत्रै (—आमन्त्र्य नवभिर्मन्त्रैः)
ज१-कुंभात्संकल्पपूर्वकं, ज२-कुंभान्संकल्प (—कुंभान्सङ्कल्पपूर्वकान्)
ज१-एतान्ेवसतो. (—एतानेव ततो) ज१,२-स्वर्णपदे (—स्वणपट्टे)

१०. (अ) ज१-ऋतु:, ज२-क्रतु: (—कर्तु:)
ज१,२-शिरसिंत (—शिरसि)
ज१-चव्यवाल्लिङ्ग, ज२-चव्ययाप्लिङ्ग (—तान्बध्वा वाब्लिङ्गैः)
ज१,२-देवमंत्रिकै: (—वेदमन्त्रकै:)
(ब) ज१-स्वाप्यतेराजये ततः, ज२- (स्नाप्येतेराजयेततः)
(—स्नाप्य नीराजयेत्ततः)
११. (अ) ज१-दद्यात्षट्टं, ज२-दद्यात्षष्टं (—दद्यात्पट्टं)
ज१-ग्रहक्षेभ्य:, ज२-भग्रहक्षेभ्य: (—ग्रहज्ञेभ्य:)
(ब) ज१,२-दद्यादिष्टेभ्य: (—दद्याच्छिष्टभ्यश्च)
१२. (ब) ज१-सहस्रनयनश्चन्द्र:, ज२-सहस्रनयनश्चन्द्रे: (—सहस्रनयन: शक्रो)
ज१-ग्रहपीडाख्ययोहतु (—ग्रहपीडां व्यपोहतु)
१३. (अ-ब) ज१,२-पाठोनास्ति
१४. (अ) ज१,२-सप्तार्चिरविवियुति: (—सप्तार्चिरमितद्युति:)
१५. (ब) ज१,२-यमश्चन्द्रोपरोगोत्था, मु. पु. पनश्चन्द्रोपरागोत्था
(—यमश्चन्द्रोपरागोत्था)
१७. (ब) ज१-वरुणोस्तुपति:, २-वरुणोस्तुपति: (—वरुणोऽम्बुपति:)
१८. (अ) ज१,२-ब्राह्मरुमोहिलोकानां (—प्राणरूपो हि यो लोकान्)
२१. (अ) ज१-हंतुमे (—दहन्तु मे)
२२. (अ-ब) पाठोनास्ति
२३. (ब) बंधूधनसंक्षय:, ज२-बंधुधनशंशय: (—बन्धुधनक्षय:)

पुष्पिका:—ज१-इति श्रीवृद्धवसिष्ठ ब्रह्मर्षि विरचितायां महासंहितायां उपराग भ्रासाषिंभिषेक स्वरूप लक्षणं नाम षट्गविंग्रहण सांतिध्याय:॥३६॥

पुष्पिका:—ज२-इति श्रीवृद्धवसिष्ठ ब्रह्मऋषि विरचितायां उपरागग्रासाभिषेक स्वरूप लक्षणं नाम षट्त्रिंशोध्याय:॥३६॥

***

# ३७

## अथ यात्राध्यायः

**निखिलगुणयुतानां राज्ञां कथयामि विधानमत्रयात्रायाः।**
**जातकमवलोक्य तदेतत्फलसिद्धिस्त्वन्यथा मृषा भवति।।१।।**

### नारायणी टीका

सभी गुणों से युक्त राजा के लिये यात्रा विधान कहता हूँ। जन्मपत्रिका में नक्षत्र-राशि आदि देखकर यात्रा करने से फल की सिद्धि होती है अन्यथा यात्रा मिथ्या हो जाती है।।१।।

**क्रमागतः–**

**वराहः–**

विदिते होराराशौ स्थानादिबले ग्रहाणां च।
आयुषि च परिज्ञाते शुभमशुभं यातुरिह वाच्यम्।।

—(मु. चि. पी. टी. प्र. ११, श्लोक १)

**अज्ञातजातकनामपि यात्रां प्रवदेन्निमित्तशकुनाद्यैः।**
**शुभशकुनैः शुभदा स्याद् शुभैरेतैस्तदन्यथा भवति।।२।।**

जिनकी जन्मपत्रिका नहीं है, उनके लिए नैमित्तिक यात्रा शकुनादि के द्वारा विशेष रूप कहनी चाहिए। शुभ शुकन होने पर यात्रा शुभफलप्रद तथा अशुभ शकुन होने पर यात्रा अशुभफलप्रद होती है।।२।।

**क्रमागतः–**

**कश्यपः–**

अथातः सम्प्रवक्ष्यामि यात्रां विज्ञातजन्मनाम्।
अभीष्टफलदां नृणां राज्ञां च विजयप्रदाम्।।१।।
घुणाक्षरसमायात्रा सिद्धिरज्ञातजन्मनाम्।
प्रश्नोदय निमित्ताद्यस्तेषामपि फलोदयः।।२।।

—(क. स. ३५ अ., श्लोक १-२)

**नारदः–**

अथ यात्रा यथा नृणामभीष्टफलसिद्धये।
स्यात्तथा तां प्रवक्ष्यामि सम्यग्विज्ञातजन्मनाम्।।१।।
अज्ञातजन्मनां नृणां फलाप्तिर्घुणवर्णवत्।
प्रश्नोदयनिमित्ताद्यैस्तेषामपि फलोदयः।।२।।

—(ना. स. अ. ३३, श्लोक १-२)

**परविषयविजयार्थं गन्तुर्वा समरयात्राख्या।**
**निखिला परयात्रा या सामान्या भुवि भवेद्द्विविधा।।३।।**

दूसरों के साम्राज्य पर विजय पाने की इच्छा से की जाने वाली यात्रा को समरयात्रा नाम से परिभाषित किया गया है। इसके अतिरिक्त संसार की सभी सामान्य यात्राओं को परमात्मा कहा गया है। ये दो प्रमुख यात्राओं के भेद हैं।।३।।

**कथित तिथिवासरर्क्षेष्वभिमतफलदा भवेच्च सामान्या।**
**समराह्वया च यात्रा योगविलग्नक्षितीशयोगेषु।।४।।**

पूर्वोक्त तिथि-वार-नक्षत्रादि के आधार पर साधित मुहूर्त्त में की गई सामान्य (परयात्रा) अभीष्ट फलदायक होती है, किन्तु समर नामक यात्रा (विजय यात्रा) लग्न, विभिन्न योगों के अतिरिक्त विजयार्थी राजा के जन्मकालिक योगों के आधार पर की गई यात्रा शुभफलदायक होती है।।४।।

**प्रच्छकविलग्नसमये शकुननिमित्तैः शुभावहं वाच्यम्।**
**अक्षतफलताम्बूलकरः प्रणम्य दैवज्ञमथ पृच्छेत्।।५।।**

प्रश्नकर्ता के लग्न कालानुसार, शकुन निमित्तों के द्वारा शुभफल कहना चाहिए। चावल, फूल, ताम्बूल इत्यादि हाथ में लेकर ज्योतिषी को प्रणाम करके प्रश्न करना चाहिए।।५।।

**क्रमागतः—**

**वराहः—**

तस्मान्नृपः कुसुमपुष्पफलाग्रहस्तः
प्राप्तः प्रणम्य रवये हरिदिङ्मुखस्थः।
होराङ्गशास्त्रकुशलाह्वित कारिणश्च
सङ्गृह्य दैवगणकान्सकृदेव पृच्छेत्।।

—(मु. चि. पी. टी. प्र. ११, श्लोक १)

**राज्ञोपकरणवाहनमङ्गलवाक्यादिमङ्गलैर्घोषैः।**
**सितवस्त्रपुष्पगन्धश्रुतिघोषाम्बुजेक्षुफलरत्नैः ।।६।।**

राजा को उपकरण, वाहन, कल्याणकारी वाक्य आदि मङ्गलघोष के द्वारा श्वेत वस्त्र, पुष्प, गन्ध, वेद मन्त्रों की ध्वनि, कमलपुष्प, गन्ना, फल एवं रत्नों से प्रश्न करना चाहिए।।६।।

**वत्सयुता गोवनिता ज्वलितानलपूर्णकुम्भदुग्धैश्च।**
**दधिमधुपिशिताज्योदनवेश्यावृषमद्यभूषणैर्जयदा।।७।।**

बछड़े सहित गाय, ज्वलित अग्नि, पूर्णकुम्भ, दूध, दही, मधु, मांस, घी, भात, वेश्या, बैल तथा अन्य आभूषण इत्यादि जयप्रद शकुन होते हैं।।७।।

**स्तनचरणगलोष्ठाङ्गुष्ठहस्तोत्तमाङ्ग-**
**श्रवणवदननासागुह्यरन्ध्राणि भूयः।**
**स्पृशति यदि कराग्रैर्गण्डकाद्यंसकं वा।**
**समर भुवि तदानीं शत्रुसेनां निहन्ति॥८॥**

प्रश्नकर्ता यदि वक्षस्थल (स्तन), चरण, कण्ठ, ओष्ठ, अङ्गूठा, हाथ, मस्तक, कान, मुख, नासिका, गुप्तछिद्र, कपोल तथा कन्धों का बार-बार हाथ के अग्रभाग से (उक्त शकुन में) स्पर्श करके (ज्योतिषी के सामने) बैठे तो उस समय युद्धभूमि में शत्रुसेना का नाश करता है। अर्थात् उक्त शकुन विजय सूचक है॥८॥

**प्रच्छकयात्रासमये शकुनं प्रास्थानिकं भवति।**
**स्वगृहं पुनरागमने प्रवेशशकुनं जयप्रदं नृपतेः॥९॥**

प्रश्न कर्त्ता के यात्रा के समय शकुन की प्रास्थानिक होता है। राजा के अपने घर में पुन: आगमन के लिए प्रवेश शकुन राजा के लिए विजयप्रद होता है। अर्थात् युद्ध यात्रा तथा युद्ध के उपरान्त गृह में प्रवेश करते समय शकुन ही प्रधान होते हैं॥९॥

**तृणतुषफणिचर्माङ्गारकार्पासपङ्कै-**
**र्लवणगुडवसास्थिक्लीबतैलोषधैश्च॥**
**रिपुविडसितधान्यव्याधिताभ्यक्ततक्रैः।**
**पतितजटिलमुण्डोन्मत्तवान्तैर्न सिद्धिः॥१०॥**

तृण, भूसा, सर्प केंचुल (सर्पगञ्ज) जलता कोयला, कपास, कीचड़, नमक, गुड़, वसा, अस्थि, नपुंसक, तैल, औषधि, शत्रु के दुर्वचन, चिल्लाना, व्याधिपूर्णधान्य रोगी, तक्र (मट्ठा) पतितजन, जटिल (संन्यासी), सिर मुण्डाये हुए व्यक्ति तथा उन्मुक्त (पागल) जन दिखाई दें तो यात्रा में कार्य सिद्धि नहीं होती॥१०॥

**क्रमागतः—**

**नारदः—**

पतितक्लीवजटिलोन्मत्तवान्तौषधादिभिः।
अभ्यक्त काष्ठान्यस्थीनिचर्मांगारतुषाग्निभिः॥
गुडकार्पासलवणवसातैलतृणोरगैः ।
वन्ध्याव्यंथितकाणौ च मुक्तकेशो बुभुक्षितः॥
"प्रयाणसमये लग्ने दृष्टे सिद्धिर्नजायते।"

—(ना. सं. अ. ३३, श्लोक ८५-८६)

**प्रच्छक लग्नादशुभो निधनगो वा विलग्नगः प्रबलः।**
**गुरुसितदृष्टिविहीनः प्रभङ्गदो वा निधनदोऽपि॥११॥**

प्रश्नकर्त्ता के लग्न से अष्टमस्थान वा लग्न में प्रबल ग्रह होने से अशुभ होता है। बृहस्पति एवं शुक्र की दृष्टि से विहीन हो तो यात्रा में कार्य नष्ट होता है अथवा मृत्युप्रद भी होता है।।११।।

**शुभखचरस्त्वशुभो वा वक्रगतो लग्नगो यदि भवति।**
**लग्नगतस्तद्वर्गः प्रभङ्गदो भवति भूमिपतेः।।१२।।**

शुभग्रह वक्र हो तथा अशुभग्रह लग्न में स्थित हो अथवा अशुभग्रहों के वर्ग में लग्न स्थित हो तो राजा के लिए अङ्गकारक अर्थात् पराजय कारक होते हैं।।१२।।

**प्रच्छकनिधनविलग्नं लग्नगतं वाऽपि नैधनोपगतम्।**
**तत्पतिरष्टमगो वा यदि लग्नगतः प्रभङ्गदा शीघ्रम्।।१३।।**

प्रश्नकर्त्ता लग्न से अष्टम तथा लग्न में लग्नगत अथवा अष्टम स्थान में आया हुआ कोई भी ग्रह हो और उसका स्वामी अष्टम स्थान में हो अथवा लग्न में हो तो शीघ्र ही राजा की यात्रा को भङ्ग करता है।।१३।।

**प्रच्छकलग्नादृहिमगुर्निधनगतो वारिराशिगो वाऽपि।**
**शुभखचरदृष्टिहीनः प्रभङ्गदो नैव निधनराशिस्थः।।१४।।**

प्रश्न कर्त्ता के लग्न से चन्द्रमा अष्टम स्थान में अथवा शत्रु राशि में हो अथवा शुभग्रह की दृष्टि से विहीन हो और अष्टम राशि में हो तो भी यात्रा को नष्ट नहीं करता।।१४।।

**शुभखचरस्त्वेको वा विलग्नगस्तुङ्गराशिगो वा चेत्।**
**जयति तदारिचक्रं स्वराशिगो वाधिमित्रगेहस्थः।।१५।।**

एक ही शुभग्रह लग्न में स्वोच्च राशि में हो अथवा स्वगृही हो या अपने परममित्र के घर में हो तो यात्रा करने वाला अपने शत्रुओं के समूह पर भी विजय प्राप्त करता है।।१५।।

**क्रमागतः-**

**नारदः-**

शुभे त्रिकोणकेन्द्रस्थे लाभे चन्द्रेऽथवा रवौ।
शत्रून्हन्ति गतो राजात्वंधकारं यथा रवि।।
स्वक्षेत्रगे शुभे चन्द्रे त्रिकोणायगते गते।
विनाशयत्यरीन् राजा तूलराशिमिवानलः।।

—(ना. सं. अ. ३३, श्लोक ४९-५०)

**शुभखचरौ द्वौ बलिनौ प्रच्छकलग्नस्थितौ यदा भवतः।**
**बहुविधलाभं विजयं कुरुतस्त्वतिशीघ्रमादिशेत्प्रष्टुः।।१६।।**

बलवान दो शुभ ग्रह प्रश्न कर्त्ता के लग्न में स्थित हों तो अनेक प्रकार से लाभ एवं विजयप्रद होगा ऐसा शीघ्र ही प्रश्नकर्त्ता से (ज्योतिषी को) कहना चाहिए।।१६।।

**बलक्षपक्षे प्रतिपत्प्रयाणे भङ्गप्रदा वा निधनप्रदा वा।**
**यातुर्मनोभीष्टकरा द्वितीया सम्पूर्णयात्रा फलदा तृतीया।।१७।।**

शुक्लपक्ष प्रतिपदा के दिन यात्रा भङ्गप्रद अथवा निधनप्रद होती है! द्वितीया तिथि में यात्रा करने से अभीष्ट फल होता है और तृतीया तिथि में सम्पूर्ण यात्रा शुभफलप्रद होती है।।१७।।

**तिस्रोऽपि रिक्तास्तिथयः प्रायातुर्मृत्युप्रदाश्चार्थ विनाशदा वा।**
**यशस्करी भूरिधनप्रदा च या पञ्चमी मृत्युकरी च षष्ठी।।१८।।**

तीनों रिक्तातिथियों (४.९.१४) में यात्रा मृत्युप्रद अथवा धन हानिप्रद होती है। पञ्चमी तिथि में यात्रा यशकारक, प्रचुरधन प्राप्ति कारक होती है; परन्तु षष्ठी तिथि में यात्रा मृत्युकारक होती है।।१८।।

**क्रमागतः–**

**नारदः–**

षष्ठ्यष्टमीद्वादशी च रिक्तामापूर्णिमासु च।
यात्रा शुक्लप्रतिपदि निधनायाधनाय च।।

—(ना. सं. अ. ३३, श्लोक ३)

**शौनकः—**

धननाशो रवौ यातुः शक्तिनाशसितेतरे।
सोमो रक्तोद्भवो भौमे स पापेज्ञे धनव्ययः।।
जयो गुरौ मीनलक्ष्मी यातो भूरि वधादिकम्।
गुणारि लाभखेटानां क्रूरा वाराः सुखप्रदाः।।
शनौ सोमे न पूर्वाशां न यायाद्दक्षिणे गुरौ।
प्रतीच्यां तु रवौ शुक्रे सोतरा बुधभौमयोः।।
प्राचीं प्रति गुरौयायाद् दक्षिणं शनिसोमयोः।
वारुणी भौमबुधयोरूत्तरां सितसूर्ययोः।।

—(ज. मो. अ. ८७, श्लोक ५०-५३)

**सप्तमी विजयदा तथाऽष्टमी शोकदुःखभयदामयप्रदा।**
**सर्वदुःखशमनी यशस्करी लाभदा च दशमी निरन्तरम्।।१९।।**

सप्तमी तिथि में यात्रा विजयप्रद, अष्टमी में शोक, दुःख, भय एवं रोगप्रद तथा दशमी तिथि में यात्रा निरन्तर सभी दुःखों का निवारण यशप्रदा एवं लाभकारक- ।।१९।।

**पशुप्रदा मानकरी सुगन्धरक्ताम्बरानेकशुभप्रदा स्यात्।**
**एकादशी चित्रमृगप्रभूतधान्याकराद्युत्तमवस्तुदा स्यात्।।२०।।**

पशुप्रदा, मान देने वाली, सुगन्ध, रक्त वस्त्र और अनेक विधाओं से शुभफलप्रद होती है। एकादशी तिथि में यात्रा विचित्र मृग, प्रचुर धान्यप्रदा तथा उत्तम वस्तुओं को देने वाली होती है।।२०।।

**भूरिभूतिनाशिनी भूरिधर्महारिणी।**
**भूरिभीतिदायिनी द्वादशी प्रभङ्गदा।।२१।।**

द्वादशी तिथि प्रभूत धन का नाश करने वाली, अनेक धर्मक्रियाओं की हरण (नाश) करने वाली तथा अनेक प्रकार के भय को देने वाली होती है।।२१।।

**त्रयोदशी सुभोगदा विपक्षपक्षनाशिनी।**
**विनाशदाथ पूर्णिमा यशःक्षयं करोति वा।।२२।।**

त्रयोदशी तिथि श्रेष्ठ भोगप्रदा, विपक्ष के पक्ष को नष्ट करने वाली तथा पूर्णिमा विनाशप्रद एवं यश को क्षय करने वाली होती है।।२२।।

**सितराद्यवासरो विभूतिसौख्यभोगदः।**
**सितेतरे जघन्यके फलप्रदाश्च वासराः।।२३।।**

कृष्णापक्ष प्रथम दिवस अर्थात् प्रतिपदा तिथिविभूति और सुखऐश्वर्य देने वाली होती है, जबकि कृष्णपक्ष की अन्य तिथियां जघन्य फलप्रद होती हैं।।२३।।

**सुरेज्यदैत्येज्यशशीन्दुजानां वाराश्च वर्गाः शुभदाः प्रयाणे।**
**आदित्यभूसूनुशनैश्चराणां वाराश्च वर्गा न शुभप्रदा स्युः।।२४।।**

बृहस्पति, शुक्र, चन्द्रमा एवं बुधवारों में इन्हीं का वर्ग भी हो तो यात्रा शुभ हो जाती है। सूर्य, मङ्गल और शनिवारों में इन्हीं का वर्ग हो तो यात्रा में शुभफल नहीं होता।।२४।।

**क्रमागतः–**

**राजमार्त्तण्डः—**

सूर्यदिनेऽध्वनि नाशश्चन्द्रे शक्तिक्षयोऽर्थनाशश्च।
ज्वलनासृक्पित्तरुजः कौजे बौधे सुहृत्प्राप्तिः।।
जीवे जयधनलब्धिः शुक्र स्त्रीवस्त्रगन्धधनलाभः।
दैत्यवधबन्धरोगान्प्राप्नोति दिनेऽर्केपुत्रस्य।।

—(मु. चि. पी. धा. टी. प्र. ११, श्लोक ९)

**पौष्णद्वयादित्यकरेज्यमित्रविष्णिवन्दुवस्वाह्वयभानि यानि।**
**श्रेष्ठानि यात्रासु नवैव तानि मुक्त्वा त्रिपञ्चादिमसप्तभानि।।२५।।**

रेवती से दो अर्थात् रेवती और अश्विनी, पुनर्वसु, हस्त, पुष्य, अनुराधा, श्रवण मृगशिरा तथा धनिष्ठा ये नौ नक्षत्र यात्रा में श्रेष्ठ हैं। अपने जन्म नक्षत्र से तीसरा, पञ्चम, पहला तथा सातवां नक्षत्र त्यागकर यात्रा शुभ होती है॥२५॥

**क्रमागतः–**

**नारदः–**

पौष्णेर्केन्द्वश्विमित्राग्निहरितिष्यवसूड्षु।
नवसप्तपञ्चमायेषु यात्राभीष्टफलप्रदा॥

—(ना. सं. अ. ३३, श्लोक ४)

**तिस्रोत्तरा वारुणनैर्ऋतेन्द्र पूर्वात्रयब्राह्मदशैव भानि।**
**मध्यानि कष्टान्यनिलानलेशद्विदैवचित्राहिमघान्तकानि॥२६॥**

तीनों उत्तरा (उ.फा.उ.षा.उ.भा.) शतभिषा, मूल, ज्येष्ठा, पूर्वात्रय (पू. फा. पू. षा. पू. भा.) और रोहिणी ये दस नक्षत्र यात्रा में मध्यम हैं। जबकि कृत्तिका, स्वाती, विशाखा, चित्रा, आश्लेषा, मघा तथा भरणी नक्षत्रों यात्रा में कष्टप्रद होती है॥२६॥

**क्रमागतः–**

**गुरुः—**

पूर्वासु त्रिषु याम्यर्क्षे ज्येष्ठायां रौद्रभौरगे।
सर्वाशासु गते यात्रां प्राणहानिर्भविष्यति॥

—(मु. चि. प. टी. प्र. ११, श्लोक ९)

**पुरुहूतदिशं पुरन्दरर्क्षे नेयाद्याम्यदिशंत्वजाङ्घ्रिधिष्ण्ये।**
**जलनाथदिशं पितामहर्क्षे शूलाख्यान्यथ सौम्ययमर्क्षे॥२७॥**

पूर्व दिशा में ज्येष्ठा नक्षत्र तथा दक्षिण दिशा में पूर्वाभाद्रपदा नक्षत्र में, पश्चिम दिशा में रोहिणी नक्षत्र में तथा भरणी नक्षत्र एवं शूल योग में उत्तर दिशा में यात्रा नहीं करनी चाहिए॥२७॥

**क्रमागतः–**

**नारदः–**

इन्द्रोजपादचतुरास्यार्यमर्क्षाणि पूर्वतः।
शूलानि सर्वद्वाराणि मैत्रार्केज्याश्विभानि च॥

—(ना. सं. अ. ३३, श्लोक ६)

**राजमार्त्तण्डः–**

"तोयेशवह्निधनदान्तक राक्षसानां यातोऽथवानिलशतक्रतुशङ्कराणाम्।"
दिग्भागमुष्ण किरणादि दिनेषु देवैः संरक्षितोऽपि निधनं न चिरादुपैति॥

सूर्यं शुक्रे कुजे राहौ मन्देचन्द्रेबुधेगुरौ।
अग्रतः शोभनायात्रा पृष्ठतोमरणं ध्रुवम्॥

प्रतीचीं रविवारेण प्राचीं च रविनन्दने।
उदीचीं भूमिपुत्रेण न यायाद्दक्षिणां गुरौ।।
—(मु. चि. पी. टी. प्र. ११, श्लोक १०)

**तुहिनकिरणमन्दवारे शक्रदिशं न च व्रजेद् गुरौ च याम्यायाम्।**
**रविसितदिने प्रतीच्यां सौम्यदिशं ज्ञारयोश्च वारशूलाः स्युः।।२८।।**

सोमवार एवं शनिवार के दिन पूर्व दिशा में, गुरुवार को दक्षिण दिशा में, रविवार एवं शुक्रवार को पश्चिम दिशा में तथा उत्तर दिशा में मङ्गल एवं बुधवार को वारशूल होता है। अत: यात्रा नहीं करनी चाहिए।।२८।।

**क्रमागतः–**

**नारदः–**

न मन्देन्दुदिने प्राचीं न व्रजेदक्षिणां गुरौ।
सितार्कयोर्न प्रतीचीं नोदीचीं ज्ञारयोर्दिने।।
—(ना. सं. अ. ३३, श्लोक ५)

**मेषादिमीनपर्यन्तं पश्चिमादिप्रदक्षिणम्।**
**चन्द्रकण्टकमित्याहुर्गमनं कार्यनाशनम्।।२९।।**

मेष राशि से मीन राशि तक पश्चिमादि दिशाओं में चन्द्रकण्टक योग कहा गया है। इस योग में यात्रा करने से कार्यनाश होता है।।२९।।

यथा—मेष में पश्चिम, वृष में उत्तर, मिथुन में पूर्व, कर्क में दक्षिण में चन्द्रकण्टक होता है। इसी प्रकार मीन पर्यन्त गणना करना चाहिए। मेष, सिंह, धनु राशियों पश्चिम में, कर्क, वृश्चिक, मीन, उत्तर में। इसी प्रकार सभी दिशाओं राशियों का स्थापन कर चन्द्रकण्टकी जानने चाहिए।

**शूलाख्यानि च धिष्ण्यानि शूलसंज्ञाश्च वासराः।**
**यामिनां मृत्युदाः शीघ्रमथवाऽश्वादि हानिदाः।।३०।।**

शूल नामक नक्षत्रों में, शूलसंज्ञक वारों में यात्रा करने वाले यात्री की शीघ्र ही मृत्यु होती है अथवा अश्व हानि हो जाती है।।३०।।

**पूर्वादिषु चतुर्दिक्षु वह्निधिष्ण्यान्निरन्तरम्।**
**सप्तसप्तक्रमेणैव द्विग्द्वाराख्यानि भानि वै।।३१।।**

पूर्वादि चारों दिशाओं में कृतिका नक्षत्र से निरन्तर गणना करके सात-सात नक्षत्रों के क्रम से दिग्द्वार संज्ञक नक्षत्र कहे हैं।।३१।।

**न लंघ्यः परिघो दण्डस्त्वग्निवायुदिगाश्रितः।**
**पूण्यार्काश्विनमैत्राणि सर्वदिग्द्वारकाणि च।।३२।।**

परिघ तथा दण्डयोगों में अग्निकोण एवं वायुकोण का उल्लङ्घण नहीं करना

चाहिए। अर्थात् यात्रा वर्जित करें! पुष्य, हस्त, अश्विनी, अनुराधा ये चार नक्षत्र सर्वदिग्द्वार नक्षत्र हैं। अर्थात् इन नक्षत्रों में यात्रा सभी दिशाओं में की जा सकती है।।३२।।

**सर्वदिक्ष्वपि यातॄणां सर्वकामार्थदानि च।**
**पूर्वादिदिक्षु मेषाद्याः क्रमाद्दिग्द्वारराशयः।।३३।।**

सभी दिशाओं में यात्री के लिये ये चार नक्षत्र सभी कामनाओं को पूरा करने वाले तथा धनप्रद होते हैं। पूर्वादि दिशाओं में मेषादि द्वादश राशियों के क्रम से दिग्द्वार राशियां कही हैं।।३३।।

**सर्वदिक्षु प्रशस्तोऽपि पुष्यः सर्वार्थसाधकः।**
**प्रतीच्यां गमने त्याज्यः सौख्यसम्पदमिच्छता।।३४।।**

सभी दिशाओं में पुष्य नक्षत्र प्रशस्त तथा सभी धनों का साधक कहा गया है, परन्तु पश्चिम दिशा में यात्रा करने पर सुख एवं सम्पत्ति की इच्छा रखने वाला पुष्य नक्षत्र का यात्रा में त्याग करे।।३४।।

**दिग्द्वारराशयः सर्वे तद्दिग्यातुर्जयप्रदाः।**
**तद्वर्गाश्च तदंशाश्च लग्नाधिपस्तथाविधः।।३५।।**

सभी दिग्द्वार राशियों में उनकी ही दिशा में यात्रा करने पर विजय प्राप्ति होती है, जबकि उन राशियों के वर्ग में तथा अंश में लग्न का स्वामी भी हो तो जय देने वाला होता है।।३५।।

**एकोऽपि वक्रगः खेटो लग्नस्थश्चारिराशिगः।**
**नीचस्थो वा तदंशस्थो यात्राकाले विनाशदः।।३६।।**

एक भी वक्रगति में गया हुआ ग्रह लग्न में स्थित हो अथवा शत्रुराशि में गया हो, नीच राशि में हो या नीचांश में हो तो यात्रा काल में विनाश होता है।।३६।।

**यात्रायां यस्य वा शुक्रः सम्मुखो दक्षिणस्थितः।**
**करोति वहुधा नाशं बुधश्चेन्निधनप्रदः।।३७।।**

यात्रा में जिसका शुक्र सामने या दक्षिण में हो तो ऐसा शुक्र यात्रा में बहुत प्रकार से नाश करता है, जबकि बुध भी हो तो मृत्युप्रद होता है।।३७।।

**दिगीश्वरा भास्कर शुक्रभौमराह्वार्किचन्द्रज्ञसुरार्चिताः स्युः।**
**दिगीश्वरे यत्र ललाटसंस्थे यात्रा न कार्या न च सन्निवेशः।।३८।।**

सूर्य, शुक्र, मङ्गल, राहु, शनि, चन्द्रमा, बुध एवं बृहस्पति ये क्रमशः दिशाओं के स्वामी हैं। दिशा का स्वामी यहाँ ललाट में स्थित हो तो यात्रा एवं प्रवेशादि नहीं करना चाहिए।।३८।।

**क्रमागतः-**

**नारदः-**

दिगीशः सूर्यशुक्रारराह्वार्कीन्दुज्ञसूरयः।
दिशीश्वरे ललाटस्थे यातुर्न पुनरागमः।।
लग्नस्थो भास्करः प्राच्यां दिशि यातुर्ललाटगः।
द्वादशैकादशः शुक्रः अग्नेय्यां तु ललाटगः।।
दशमस्थो कुजो लग्नाद्याम्यायां तु ललाटगः।
नवमोऽष्टमगो राहुर्नैऋत्यां तु ललाटगः।।
लग्नात्सप्तमगः सौरिः प्रतीच्यां तु ललाटगः।
षष्ठपञ्चमगश्चन्द्रो वायव्यां तु ललाटगः।।
चतुर्थस्थानगः सौम्य उत्तरस्यां ललाटगः।
द्वित्रिस्थानगतो जीव ईशान्यां तु ललाटगः।।

—(ना. सं. अ. ३३, श्लोक ९-१३)

**राशीनेकं द्वाविनाक्रान्तराशेरप्रादक्षिण्यान्न्यसेद् दिग्विदिक्षुः।**
**यद्दिग्राशौ लग्नगे सम्मुखत्वे तद्दिग्यातुर्मृत्युदस्तद्दिगीशः।।३९।।**

एक राशि को द्वितीय राशि के विना अक्रान्त राशि में अप्रदक्षिण क्रम से प्रत्येक दिशाओं एवं कोणों में स्थापित करें। जिस दिग् राशि में लग्न में ग्रह सम्मुख हो तो उस दिशा में यात्रा करने से उसी दिशा का स्वामी यात्री के लिए मृत्युकारक हो जाता है।।३९।।

**क्रमागतः-**

**नारदः-**

ललाटगं तु सन्त्यज्य जीवितेच्छुर्व्रजेन्नरः।
विलोमगो ग्रहो यस्य यात्रालग्नोपगोयदि।।
तस्यभङ्गप्रदो राज्ञस्तद्वर्गोऽपि विलग्नगः।
रवीन्द्वयनयोर्यानमनुकूलं शुभप्रदम्।।

—(ना. सं. अ. ३३, श्लोक १४-१५)

**रत्नकोशे-**

"योऽधिपतिर्दिशि यस्यास्तमिंस्तत्स्थेन तां दिशिं यायात्।।"
अनुकूले च दिगीशे गन्तव्यं कष्टकोपगते।।

—(मु. चि. पी. टी. अ. ११, श्लोक ५१)

**प्रायणसमये यस्य विद्युन्नीहारवृष्टयः।**
**अकालजा भवन्त्येते सदा भङ्करामृशम्।।४०।।**

यात्रा के समय बिजली गर्जन अथवा वर्षा हो रही हो तो यह अकालज यात्रा सर्वदा भङ्ग करने वाली होतीं है।।४०।।

